वृषः शाद्वलमध्येषु चरते गोकुलादिषु ।
तस्याधिवासभूमिस्तु कृषीवलधराश्रया ॥
स्त्रीपुंसयोः समं रूपं शय्यासनपरिग्रहैः ।
वीणावाद्यधृङ्मिथुनं गीतनर्त्तकशिल्पिषु ॥
स्थितं क्रीडा रतिर्नित्यं विहारोऽवनिरस्य तु ।
मिथुनं नाम विख्यातं राशिर्द्वेधात्मकः स्मृतः ॥
कर्किः कुलीरेण समः सलिलस्थः प्रकीर्त्तितः ।
केदारवापीपुलिनविविक्तावनिरेव च ॥
सिंहस्तु पर्व्वतारण्यदुर्गकन्दरभूमिषु ।
वसते व्याधपल्लीषु गह्वरेषु गुहासु च ॥
या हि प्रदीपककरा नावारूढा च कन्यका ।
चरते स्त्रीरतिस्थाने वसते नड्वलेषु च ॥
तुलापाणिश्च पुरुषो वीथ्यापणविचारकः ।
नगराध्वनि शालासु वसते तत्र नारद ॥
श्वभ्रवल्मीकसञ्चारी वृश्चिको वृश्चिकाकृतिः ।
विषगोमयकीटोऽहिपाषाणादिषु संस्थितः ॥
धनुस्तुरङ्गजघनो दीप्यमानो धनुर्द्धरः ।
वाजिसूरोऽस्त्रविद्वीरः स्थायी गजरथादिषु ॥
मृगास्यो मकरो ब्रह्मन् ! वृषस्कन्धः फणाङ्गदः ।
मकरोऽसौ नदीचारी वसते च महोदधौ ॥
रिक्तकुम्भश्च पुरुषः स्कन्धधारी जलाप्लुतः ।
द्यूतशालाचरः कुम्भः स्थायी शौण्डिकसद्मसु ॥
मीनद्वयमथासक्तो मीनस्तीर्थाम्बुसञ्चरः ।
वसते पुण्यदेशेषु देवब्राह्मणपूजकः ॥
लक्षणं गदितं तुभ्यं मेषादीनां महामुने ।
न कस्यचित्त्वयाख्येयं गुह्यमेतत् पुरातनम् ॥
एतन्मया ते कथितं सुरर्षे
यथा त्रिनेत्रः प्रममाथ यज्ञम् ।
पुण्यं पुराणं परमं पवित्रं
संशृण्वतां पापहरं शिवञ्च ॥"

इति श्रीवामनपुराणे पुलस्त्यनारदसंवादे हरलक्षितः पञ्चमोऽध्यायः ॥

राशिचक्रं, क्ली, ( राशीनां चक्रम् । ) मेषादिद्वादशराश्यादियुक्तवृत्तम् । तस्य नामान्तरं भचक्रं ज्योतिषचक्रञ्च । यथा,—
"सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम् ।
तदर्कांशो भवेद्राशिर्नवर्क्षचरणाङ्कितः ॥"
इति दीपिका ॥ * ॥

तद्विवरणं यथा,—
"भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः ।
पर्य्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥
उपरिस्थस्य महती कक्षाल्पाधःस्थितस्य च ।
महत्या कक्षया भागा महान्तोऽल्पास्तयाल्पया ॥
कालेनाल्पेन भगणं भुङ्क्तेऽल्पभ्रमणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन् ॥
स्वल्पया तु बहून् भुङ्क्ते भगणान् शीतदीधितिः ।
महत्या कक्षया गच्छन् ततः स्वल्पं शनैश्चरः ॥
मन्दादधःक्रमेण स्युश्चतुर्था दिवसाधिपाः ।
वर्षाधिपतयस्तद्वत् तृतीयाः परिकीर्त्तिताः ॥
ऊर्द्ध्वक्रमेण शशिनो मासानामधिपाः स्मृताः ।
होरेशाः सूर्य्यतनयादधोऽधः क्रमशस्तथा ।
भवेद्भकक्षा तीक्ष्णांशोर्भ्रमणं षष्टिताडितम् ।
सर्व्वोपरिष्टाद्भ्रमति योजनैस्तैर्भमण्डलम् ॥"
तत्र कक्षाक्रममाह ।
"ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते ।
तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा ॥
मन्दामरेज्यभूपुत्त्रसूर्य्यशुक्रेन्दुजेन्दवः ।
परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः ॥"
इति सूर्य्यसिद्धान्तः ॥ * ॥

ग्रहचयचक्रसंयोगे पञ्चविधविजनकं राशिचक्रं यथा,—
"राशिचक्रं प्रवक्ष्यामि कृपार्द्धं हितकाम्यया ।
रविर्जीवस्तथा सौम्यस्तेषु चन्द्रे समागते ।
जलपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्जीवस्तथा शुक्रस्तेषु चन्द्रे समागते ।
वायुपातो भवेत् सत्यमित्युक्तं विष्णुयामले ॥
रविर्ज्जीवस्तथा भौमस्तेषु चन्द्रे समागते ।
अग्निपातो भवेत् सत्यमित्युक्तं ब्रह्मयामले ॥
रविर्भौमस्तथा राहुस्तेषु चन्द्रे समागते ।
लोहपातो भवेत् सत्यमित्युक्तं रुद्रयामले ॥
रवौ राहुस्तथा केतुस्तेषु चन्द्रे समागते ।
पाषाणपातोऽपि भवेदित्युक्तं भानुयामले ॥"
इति नरपतिजयचर्य्यायां तुम्बुरुचक्रे राशिचक्रम् ॥ * ॥ जातकराशिचक्रम् । यथा,—
"लग्नादिव्ययपर्य्यन्तं राशिचक्रं व्यवस्थितम् ।
तत्र शुभाल्पमतयो जल्पयन्ति यथा तथा ॥"
इति पञ्चस्वरा ॥ * ॥

मन्त्रग्रहणोक्तराशिचक्रम् यथा । आगमकल्पद्रुमे ।
"रेखात्रयं पूर्व्वपरागतं स्यात्
तन्मध्यतो याम्यकुवेरभेदात् ।
एकैकमीशानशिवाचरे तु
हुताशवाय्वोर्व्विलिखेत्ततोऽर्णान् ॥
वेदाग्निवह्नियुगलश्रवणाग्निसंख्यान्
पञ्चेषुवायुशरपञ्चचतुष्टयार्णान् ।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्यागतान् प्रविलिखेदथ शादिवर्णान् ॥"
तथा,—
"वाणं गौरं खरं शोणं शमी शोभेति राशिषु ।
क्रमेण मिलिता वर्णाः कन्यायां शादयः स्मृताः ॥"
तेन अ आ इ ई मेषः । उ ऊ ऋ वृषः । ॠ ऌ ॡ मिथुनम् । ए ऐ कर्कटः । ओ औ सिंहः । अं अः श ष स ह क्षः कन्या । कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गः कुम्भः । यवर्गो मीनः । स्वराशीनामनुकूलं मन्त्रं भजेत् । तथा च ।
"स्वताररराशिकोष्ठानामनुकूलान् भजेन्मनून् ॥"
इति वचनात् ॥
"राशीनां गुणता ज्ञेया लग्नेभ्यश्च मतिं त्वयम् ।
स्वराशिमन्त्रराश्यन्तं गणनीयं विपश्चिता ॥"
यदा तु स्वराशेरज्ञानं तदा साधकनामाद्यक्षरसम्बन्धिनं राशिं गणनां गणयेत् ।
"साध्याद्यक्षरराश्यन्तं गणयेत् साधकाक्षरम् ।"
इति रामार्च्चनचन्द्रिकाधृतवचनात् । तथा,
"अत्राति राशिचक्रे नामाद्यक्षरराशितः ॥"
इति तन्त्रराजे ॥
"तेन मन्त्राद्यवर्णेन नामवर्णाद्यकेन च ।
गणयेद्दूयदि षष्ठं चाष्टमं द्वादशन्तु वा ।
रिपुर्म्मन्त्राद्यवर्णः स्यात् तेन तत्याजितं भवेत् ॥
एक पञ्च नव बान्धवाः स्मृताः
द्वौ च षट् च दशमाश्च सेवकाः ।
वह्निसप्तमुनयस्तु पोषकाः
द्वादशाष्टचतुरस्तु घातकाः ॥"
इति विष्णुविषयम् ॥
रामार्च्चनचन्द्रिकाधृतत्वात् । शक्त्यादौ तु षष्ठं वर्ज्जनीयम् । तथा च ।
"षष्ठाष्टमद्वादशानि वर्ज्जनीयानि यत्नतः ॥"
इति वचनात् ॥

तन्त्रान्तरे ।
"लग्नं धनं भ्रातृबन्धुपुत्त्रशत्रुकलत्रकाः ।
मरणं धर्म्मकर्म्मायव्यया द्वादश राशयः ॥
नामानुरूपमेतेषां शुभाशुभफलं लभेत् ॥
लग्ने सिद्धिस्तथा नित्यं धने धनसमृद्धिदः ।
भ्रातरि भ्रातृहिंसश्च शत्रौ शत्रुविवर्द्धनः ॥
पुत्रे पुत्त्रविवृद्धिः स्यात् बन्धौ बान्धववत् प्रियः ।
कलत्रे मध्यमा प्रोक्ता मरणे मरणं भवेत् ॥
धर्म्मे धर्म्मविवृद्धिः स्यात् सिद्धिदः कर्म्मसंस्थितः ।
आये च धनसम्पत्तिर्व्यये च सचिवक्षयः ॥"
वैष्णवतन्त्रे तु शत्रुस्थाने बन्धुरिति पाठः । इति तन्त्रसारः ॥

राशिव्यवहारः, पुं, ( राशेर्व्यवहारः । ) धान्यराशिपरिमाणज्ञापकाङ्कः । तद्विवरणं यथा,—
अथ राशिव्यवहारे करणसूत्रं वृत्तम् ।
"अनणुषु दशमांशोऽथाणुष्वेकादशांशः
परिधिनवमभागः शूकधान्येषु वेधः ।
भवति परिधिषष्ठे वर्गिते वेधनिघ्ने
घनगणितकराः स्युर्मागधास्ताश्च खार्य्यः ॥"
उदाहरणम् ।
"समभुवि किल राशिर्यः स्थितः स्थूलधान्यः
परिधिपरिमितिः स्याद्धस्तषष्टिर्यदीया ।
प्रवद गणक खार्य्यः किंमिताः सन्ति तस्मिन्
अथ पृथगणुधान्यैः शूकधान्यैश्च शीघ्रम् ॥"

अथ स्थूलधान्यराशिमानावबोधनाय




परिधिः ६० । वेधः ६ । परिधेः षष्ठांशः १० । वर्गितः १०० । वेध ६ निघ्नः । जाताः खार्य्यः ६०० ।

चन्दनागुरुकस्तूरीकुङ्कुमैरपि चर्च्चिते ।
विचरन्निरिव भाति काम इव महोत्सवः ।
धावेद्वृन्दावने रम्ये यमुनापुलिने वने ॥
निकुञ्जवने तत्र गोपीमण्डलमण्डितम् ।
रासमण्डलमध्यस्थं गोविन्दं कार्त्तिकागतम् ॥
द्वयोर्द्वयोर्गोपिकयोर्मध्ये वांशीमनेकधा ।
अपरं नटवेशेन मध्ये तं मुरलीधरम् ॥
गोपीमण्डलमुखाम्भोजमधुपानमधुव्रतम् ।
कुलालचक्रप्रतिमं मण्डलं पद्मलाञ्छितम् ॥
द्वारशोभितं कार्य्यं महिष्योऽष्टौ च सन्निधौ ।
मध्ये मध्ये च गोविन्दं पार्श्वयोरष्टरूपकम् ॥
मुकुन्दं माधवं तत्र नटनागरमेव च ।
हरिं दामोदरं विष्णुं पूजयेत् कामरूपिणम् ॥
तदाज्ञे भूपुरे गोप्यः शतशोऽथ सहस्रशः ।
पूजनीयाः प्रयत्नेन नृत्यगीतपरायणाः ॥
असंख्या गोपिकास्तत्र मण्डलेऽष्टौ वराङ्गनाः ।
महिष्यष्टाः समाख्याताः सदाभक्तसुनिश्चिताः ॥
भक्तोत्सवाभिलाषेण कमला बहुरूपिणी ।
राधा विशाखा विमला सुमित्रा ललिता तथा ।
सुन्दरी कमला रम्भा महिष्योऽष्टौ प्रकीर्त्तिताः ॥
तारा राधा निराबाधा लक्ष्मी भेदमुपागताः ।
नाना ध्यानैर्ब्बहुमाखैः पूजा कार्य्या विशेषतः ॥
उत्तीर्णे सायं समये गोप्यो वृन्दावनं ययुः ।
रासक्रीड़ां ततस्ताभिश्चक्रे च जगदीश्वरः ॥
गोप्यो रासक्रीड़ां चक्रुः पौर्णमास्यां महा-
निशि ।
न तत्र पश्चिमनिशो न भिन्नोनिनदस्तथा ॥
महानिशा द्वे घटिके रात्रेर्म्मध्यमयामयोः ।
तदप्राप्तौ च कर्त्तव्यं पौर्णमास्यां निशामुखे ॥
एवं रासक्रीड़ां यस्तु कारयेद्भुवि मानवः ।
स सर्व्वदुष्कृतं त्यक्त्वा निर्व्वाणमुक्तिमाप्नुयात् ॥"
इत्युत्कलकलिका ॥

( विलासः । यथा, भागवते । ५ । २ । १२ ।
"अक्षविषस्य मम उन्नयनौ बिभर्षि
वल्गुतं सरसरासमुधादिवक्त्रे ।"
"वक्त्रे च वल्गुतं बिभर्षि किं तदाह । रसो मधुरालापः रासो विलासस्ताभ्यां सहिता सुधा अधरामृतम् । आदिशब्दात् स्मितनर्म्मादि ।" इति तत्र श्रीधरस्वामी ॥ क्रिया । यथा, भागवते । ५ । १३ । १७ ।
"तैर्वञ्चितो हंसकुलं समाविशन्
अरोचयन् शीलमुपैति वानरान् ।
तज्जातिरासेन सुनिर्वृतेन्द्रियः
परस्परोद्वीक्षणविस्मृतावधिः ॥"
"तैर्वञ्चितस्तत्र धनाभावं ज्ञात्वा हंसानां ब्राह्मणानां कुलं पुनः प्रविशन् तेषां शीलं प्रायश्चित्तपूर्ब्बकं पुनरुपनयनाद्याचारमरोचयन् अप्रियं पश्यन् वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेन वानरजातिक्रियया स्त्रियां मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतो जीवितावधिर्मरणकालो येन ।" इति तट्टीकायां श्रीधरस्वामी ॥ * ॥ )

रासभः, पुं, ( रासते शब्दायते इति । रास + "रासिवल्लिभ्याञ्च ।" उणा० ३ । १२५ । इति अभच् । ) गर्द्दभः । इत्यमरः । २ । ९ । ७८ ॥ ( अयं हि ब्रह्मणः पद्भ्यां जातः । यथा, मार्कण्डेये । ४८ । २६ ।
"पद्भ्यामश्वान् समातङ्गान् रासभान् शशकान्
मृगान् ।
उष्ट्रानश्वतरांश्चैव नानारूपाश्च जातयः ॥"
अश्वतरः । खच्चर इति भाषा । यथा, महाभारते । १ । १४५ । ७ ।
"स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥")

रासभवन्दिनी, स्त्री, मल्लिका । इति शब्दचन्द्रिका ॥

रासभी, स्त्री, ( रासभ + ङीप् । ) गर्द्दभी । इति शब्दरत्नावली ॥ ( यथा, महाभारते । १३ । २७ । १४ ।
"एतत् श्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥" )

रासमण्डलं, क्ली, ( रासस्य मण्डलम् । ) श्रीकृष्णस्य रासक्रीड़ास्थलम् । तद्विवरणम् । यथा,—
"तस्मादुपरि गोलोकः पञ्चाशत्कोटियोजने ।
वायुना धार्य्यमाणश्च विचित्रपरमाश्रयः ॥
अतीवरत्ननिर्म्माणो नित्यरूपो महीच्छया ।
शतशृङ्गेण शैलेन पुण्यवृन्दावनेन च ॥
सुरासमण्डलेनापि नद्या विरजयावृतः ।
कोटियोजनविस्तीर्णा प्रस्थेन विरजा ध्रुव ॥
दैर्घ्ये तस्य शतगुणा परितः परमा शुभा ।
अमूल्यरत्ननिकरा हीरामाणिक्ययोस्तथा ॥
मणीनां कौस्तुभादीनामसंख्यानां मनोहरा ।
अमूल्यरत्ननिर्म्माणं तत्रापि प्रतिमन्दिरम् ॥
मनोहरञ्च प्राकारमद्भुतं विश्वकर्म्मणा ।
गोपीभिर्गोपनिकरैर्वेष्टितं कामधेनुभिः ॥
कल्पवृक्षैः पारिजातैरसंख्यैश्च सरोवरैः ।
पुष्पोद्यानैः सुकोटिभिः संवृतं रासमण्डलम् ॥
वेष्टितं वेष्टितैर्गोपीमन्दिरैः शतकोटिभिः ।
रत्नप्रदीपयुक्तैश्च पुष्पतल्पसमन्वितैः ॥
सुगन्धिचन्दनामोदैः कस्तूरीकुङ्कुमान्वितैः ।
क्रीड़ोपयुक्तभोगैश्च ताम्बूलैर्वासितैर्जलैः ॥
धूपैः सुरभिरम्यैश्च माल्यैश्च रत्नदर्पणैः ।
रक्षकै रक्षितैः शश्वद्दासदासीविकोटिभिः ॥
अमूल्यरत्नाभरणैर्वह्निशुद्धांशुकैरपि ।
लक्षमत्तगजेन्द्राणां वेष्टितैश्च बलैः क्रमात् ॥
नवयौवनसम्पन्नैः रूपैर्निरुपमैरपि ।
रम्यञ्च वर्त्तुलाकारं चन्द्रबिम्बं यथा व्रज ॥
अमूल्यरत्नरचितं दशयोजनविस्तृतम् ।
कस्तूरीकुङ्कुमै रम्यैः सुगन्धिचन्दनार्च्चितैः ॥
आवृतं मङ्गलघटैः फलपल्लवसंयुतैः ।
दधिलाजैश्च पर्णैश्च स्निग्धदूर्व्वाङ्कुरैः फलैः ॥
श्रीरामकदलीस्तम्भैरसंख्यैश्च मनोहरैः ।
पट्टसूत्रनिबद्धैश्च स्निग्धचन्दनपल्लवैः ॥
चन्दनागुरुमालाभिश्च भूषणैश्च विभूषितम् ।
अमूल्यरत्नरचितं शतशृङ्गं मनोहरम् ॥
कोटियोजनविस्तीर्णं दैर्घ्यं दशगुणोत्तरम् ।
शैलप्रस्थं परिमितं पञ्चाशत्कोटियोजनम् ॥
अतीवकमनीयञ्च वेदैरनिर्व्वचनीयकम् ।
प्राकारमिव तस्यापि गोलोकस्य मनोहरम् ॥
परितो वेष्टितं रम्यं हीराहारसमन्वितम् ।
तत्र वृन्दावनं रम्यं युक्तं चन्दनपादपैः ॥
कल्पवृक्षैश्च रम्यैश्च मन्दारैः कामधेनुभिः ।
शोभितं शोभनाढ्यैश्च पुष्पोद्यानैर्मनोहरैः ॥
क्रीड़ासरोवरै रम्यैः सुरम्यै रतिमन्दिरैः ।
अतीवरम्यं रहसि रासयोग्यस्थलान्वितम् ॥
रक्षितं रक्षकै रम्यैरसंख्यैर्गोपिकागणैः ।
परितो वर्त्तुलाकारं त्रिंशद्योजनं वनम् ॥
षट्पदध्वनिसंयुक्तं पुंस्कोकिलरुतान्वितम् ।
तत्राक्षयवटो रम्यो रहस्येव हि विस्तृतः ॥
सहस्रयोजनोर्द्ध्वश्च परितश्च चतुर्गुणः ।
गोपीनां कल्पवृक्षश्च सर्व्ववाञ्छाफलप्रदः ॥
क्रीड़ान्वितैरारतस्य राधादासीविलक्षणैः ।
विरजातीरनीरोत्था यमुनाशीतलेन च ॥
पुष्पान्वितेन मान्द्येन पवनेन सुगन्धिना ।
दासीगणैरसंख्यैश्च वृन्दावनविनोदिनी ॥
तत्र क्रीड़ति सा राधा मम प्राणाधिदेवता ॥
सेयं श्रीदामशापेन वृषभानुसुताधुना ।
ब्रह्मादिदेवैः सिद्धेन्द्रैर्मुनीन्द्रैः पूजिता व्रज ॥"
इति ब्रह्मवैवर्त्ते भगवन्नन्दसंवादे श्रीकृष्णजन्मखण्डे ८४ अध्यायः ॥

रासयात्रा, स्त्री, ( रासस्य यात्रा उत्सवः । ) कार्त्तिकीपौर्णमासीकर्त्तव्यश्रीकृष्णस्योत्सवविशेषः । तद्विवरणं यात्राशब्दे द्रष्टव्यम् ॥ * ॥ शक्तिविषयकरासयात्रा यथा,—
"पौर्णमास्यां रासयात्रां देव्याः कुर्य्यान्नि-
शार्द्धके ।
पूर्व्ववत्स्थापमास्थाप्य देवीं देयासनं यजेत् ॥"
पौर्णमास्यां चैत्रपौर्णमास्याम् ।
"संमुखे रासस्थानं भैरवीभैरवान्वितम् ।
ज्ञात्वा तान् पूजयित्वा च भ्रामयेत् कुम्भचक्रवत् ॥
कोलाहलं मृदङ्गादिवाद्यैर्नृत्यैः सुगीतकैः ।
कुर्य्यादानन्दहृदयः साधकः स्थिरमानसः ॥
वित्तशाठ्यं न कुर्व्वीत देवीयात्रा सुखप्रदा ॥"
इति वामकेश्वरतन्त्रे ५४ पटलः ॥

रासेरसः, पुं, ( रासे क्रीड़ाविशेषे यो रसः । अलुक्समासः । ) गोष्ठी । रासः । शृङ्गारः । रसस्थितिः । रसावासः । नर्त्तनागारकः । इति मेदिनी । सि, ६० ॥ उत्सवः । इति शब्दरत्नावली ॥ परिहासः । इति जटाधरः ॥

रासेश्वरी, स्त्री, ( रासस्य ईश्वरी । ) राधा । यथा,—
"राधा रासेश्वरी रासवासिनी रसिकेश्वरी ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे १७ अध्यायः ॥

रास्ना, स्त्री, ( रसति इति । रस आस्वादने + "रास्नासास्नास्थूणावीणाः ।" उणा० ३ । १५ । इति नप्रत्ययेन साधुः । ) स्वनामख्यातलता-

विशेषः। रायसन इति हिन्दी भाषा। तत्पर्य्यायः। नाकुली २ सुरसा ३ सुगन्धा ४ गन्धनाकुली ५ नकुलेष्टा ६ भुजङ्गाक्षी ७ छत्राकी ८ सुवहा ९। इत्यमरः॥ नाकुल्यादिपञ्चकं रास्नायाम्। नकुलेष्टादिचतुष्कं सर्पाक्ष्यामित्याहुः। इति तट्टीकायां भरतः॥ रस्या १० श्रेयसी ११ रसना १२ रसा १३ सुगन्धिमूला १४ रसाढ्या १५ अतिरसा १६ दीर्घगन्धिका १७ सर्पगन्धा १८ पलङ्कषा १९। इति जटाधरः॥ अस्या गुणाः। गुरुत्वम्। तिक्तत्वम्। उष्णत्वम्। विषवातास्रकासशोफकम्पोदरक्षेष्मनाशित्वम्। पाचनत्वञ्च।

"रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा।
श्रेयौ मूलदलौ श्रेष्ठौ तृणा रास्ना तु मध्यमा॥"

इति राजनिर्घण्टः॥

अपि च।

"नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली।
नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी॥
नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्।
भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान्॥"

इति भावप्रकाशः॥

रास्ना शोथामवातघ्नी। इति राजवल्लभः॥ औषधिविशेषः। कॉटा आमरुली इति भाषा। तत्पर्य्यायः। एलापर्णी २ सुवहा ३ युक्तरसा ४। इत्यमरः॥ अपि च।

"रास्ना युक्तरसा रस्या सुवहा रसना रसा।
एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा॥
रास्नामपाचनी तिक्ता गुरूष्णा कफवातजित्।
शोथश्वाससमीरास्रवातशूलोदरापहा।
कासज्वरविषाशीतिवातिकामयहिध्महृत्॥"

इति भावप्रकाशः॥

(रशना। यथा, वाजसनेयसंहितायाम्।१।३०।

"आदित्यै रास्नासि।"

"हे योक्त्र आदित्यै अदित्या भूम्यास्त्वं रास्नासि रशना असि॥" इति तद्भाष्ये महीधरः॥ व्रजपत्नीनामन्यतमा। यथा, ब्रह्मवैवर्त्ते।१। ९।१३—१४।

"नामानि वसुपत्नीनां सावधानं निबोध मे।
कला कलावती काष्ठा कालिका कलहप्रिया॥
कन्दली भीषणा रास्ना प्रम्लोचा भूषणा शुकी।
एतासां बहवः पुत्त्रा बभूवुः शिवपार्षदाः॥")

राहुः, पुं, (रह त्यागे + बहुलवचनात् उण्।) त्यागः। इति संक्षिप्तसारोणादिवृत्तिः॥ (रहति मुञ्चति त्यजति चन्द्रमिति। रह त्यागे + बहुलवचनात् उण्। इत्युज्ज्वलः।१।१।) ग्रहविशेषः। तत्पर्य्यायः। तमः २ स्वर्भानुः ३ सैंहिकेयः ४ विधुन्तुदः ५। इत्यमरः॥ असुरः ६ ग्रहकल्लोलः ७ सैंहिकः ८ उपप्लवः ९ शीर्षकः १० उपरागः ११ सिंहिकासुतः १२। इति शब्दरत्नावली॥ कृष्णवर्णः १३ कबन्धः १४। इति जटाधरः॥ अगुः १५ असुरः १६। इति ज्योतिस्तत्त्वम्॥ तस्योत्पत्त्यादिर्यथा,—

"सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्तथा।
व्यंशः शल्यश्च बलवान् नभः शल्यस्तथैव च॥
इल्वलो नमुचिश्चैव वातापी हरपो जिकः।
हरकल्पकलिनाभौ भौमश्च नरकस्तथा॥
राहुर्ज्येष्ठश्च तेषां वै चन्द्रसूर्य्यप्रमर्द्दनः।
इत्येते सिंहिकापुत्त्रा दैवैरपि दुरासदाः॥
दारुणाभिजनाः क्रूराः सर्व्वे ब्रह्मद्विषस्तु ते।
दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः॥
निहतो जामदग्न्येन भार्गवेण बलीयसा।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नस्तु शची सुता॥"

इति वह्निपुराणे प्रजापतिसर्गनामाध्यायः॥ *॥

तस्य शिरश्छेदकारणं यथा,—

"देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि।
प्रविष्टः सोममपिबत् चन्द्रार्काभ्याञ्च सूचितः॥
चक्रेण क्षुरधारेण जहार पिबतः शिरः।
हरिस्तस्य कबन्धस्तु सुधयाप्लावितोऽपतत्॥
शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत्।
यस्तु पर्व्वणि चन्द्रार्कावभिधावति वैरधीः॥"

इति श्रीभागवते ८ स्कन्धे ९ अध्यायः॥

स च मलयपर्व्वतजातः। धूम्रवर्णः। द्वादशाङ्गुलपरिमाणः। कृष्णवर्णः। कृष्णवस्त्रः। सिंहवाहनः। चतुर्भुजः। खड्गवरशूलचर्म्मधारी। सूर्य्यास्यः। अस्य अधिदेवता कालः। प्रत्यधिदेवता सर्पः। इति ग्रहयज्ञतत्त्वम्॥ अस्य स्वरूपं शृणुत। स च चण्डालजातिः। सर्पाकृतिः। अस्थिस्वामी नैर्ऋतदिक्स्वामी च। इति बृहज्जातकादयः॥ (राहुचारस्य फलाफलं बृहत्संहितायाः ५ अध्यायतो द्रष्टव्यम्॥)

राहुग्रासः, पुं, (राहोर्ग्रासो ग्रहणं यत्र।) चन्द्रसूर्य्ययोर्ग्रहणम्। यथा,—

"राहुग्रासोऽर्केन्द्वोर्ग्रह उपराग उपप्लवः॥"

इति हेमचन्द्रः।२।३९॥

(अत्र राहुग्राह इत्यपि पाठो दृश्यते॥)

राहुचक्रं, क्ली, (राहोश्चक्रम्।) रव्यादिसप्तवारेषु अष्टगत्या यामावर्त्तेन यामार्द्धं प्राप्य सप्तदिक्षु राहोर्गमनम्। यथा,—

"पश्चादर्के विधौ वह्नौ सौम्यां भौ वायवे कुजे।
रव्योदिशि भृगौ याम्यां गुरावीशे शनौ दिने।
राहुर्भ्रमति यामार्द्धादष्टगत्या च वामतः॥
द्यूते युद्धे विवादे च यात्रायां सम्मुखं स्थितम्।
राहुं विवर्ज्जयेद्यत्नाद्यदीच्छेत् कर्म्मणः फलम्॥"

इति सत्कृत्यमुक्तावली॥ *॥

राहुकालानलचक्रं यथा,—

"तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम्।
शलाकासप्तकं चक्रं ईशाद्यौ वह्निकादिका॥
यत्र ऋक्षे स्थितो राहुर्वदनं तद्विनिर्द्दिशेत्॥
मुखात् पुच्छदशे ऋक्षे तस्य पुच्छं व्यवस्थितम्।
अष्टोत्तरशतं ख्याता आयष्टे यत्र कीर्त्तिताः॥
प्राप्य तत्पुच्छगत् सर्व्वं बहुकालेऽवसज्जितः।
राहुमुक्तानि ऋक्षाणि जीवपक्षे प्रजीवदाः॥
मध्योदरेषु भौमानि मृतपक्षे प्रजीवयेत्।
मृतपक्षे मुखं तस्य गुदं जीवाङ्गमध्यमम्॥
एवमङ्गद्वयो राहुर्ज्ञातव्यः चरपारकैः।
जीवपक्षे चरामार्थे मृतपक्षे रवौ स्थिते।
तस्मिन् काले शुभा यात्रा विपरीते तु

हानिदा॥"

इति स्वरोदयः॥

राहुच्छत्रं, क्ली, आर्द्रकम्। इति राजनिर्घण्टः॥

राहुदर्शनं, क्ली, (राहोर्दर्शनं यत्र।) राहोश्चाक्षुषज्ञानम्। ग्रहणमिति यावत्। यथा,—

"चक्षुषा दर्शनं राहोर्यत्तद्ग्रहणमुच्यते।
तत्र कर्म्माणि कुर्व्वीत गन्धनामामतो नतु॥
राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानमाचन्तु कर्त्तव्यं दानश्राद्धविवर्ज्जितम्॥"

इति तिथ्यादितत्त्वम्॥

राहुभेदी, [न्] पुं, (राहुं भिनत्तीति। भिद् + णिनिः।) विष्णुः। इति जटाधरः॥

राहुमूर्द्धभित्, पुं, (राहोर्मूर्द्धानं भिनत्ति छिनत्तीति। भिद् + क्विप्।) विष्णुः। इति त्रिकाण्डशेषः॥

राहुरत्नं, क्ली, (राहुप्रियं रत्नम्। राहो रत्नमिति वा।) गोमेदकः। इति राजनिर्घण्टः॥

राहुलकः, पुं, बुद्धः। इति हेमचन्द्रः।२। १५१॥

राहुवृहस्पतियोगः, पुं, (राहुणा वृहस्पतेर्योगो मेलनम्।) एकराशिस्थितगुरुराहुः। गुरुचाण्डालियोग इति ख्यातः। तस्य कालाशुद्धिजनकत्वं यथा, भोजदेवव्यवहारसमुच्चये।

"सर्व्वं कार्य्यं न कर्त्तव्यं गुरौ सिंहेऽस्तगेऽपि च।
व्रतदीक्षे न कुर्व्वीत तमोयुक्ते वृहस्पतौ॥"

तमोयुक्ते राहुयुक्ते। व्रतदीक्षे इति निखिलवैदिककर्म्मोपलक्षणम्। तथा च स्मृतिसारे ज्योतिषम्।

"एकराशौ स्थितौ स्यातां यदि राहुवृहस्पती।
विवाहव्रतयज्ञादि सर्व्वं तत्र परित्यजेत्॥"

मलमासात्तुपक्रम्य भविष्ये।

"नक्षभेदेऽप्येकराशौ सम्पर्कौ यदि मानवाः।
गुरो राहोरपि तथा वर्जयेद्दान संशयः॥"

अत्र गुरोर्ल्लिप्तत्वं हेतुः।

"यत्र यत्र स्थितो जीवस्तमोयोगेन लभ्यते।
उपहासाय किं न स्यादसत्यज्ञो मनीषिणाम्॥"

इति मलमासतत्त्वम्॥ *॥

अस्य प्रतिप्रसवो यथा,—

"कर्णाटलाटाङ्गकलिङ्गदेशे
वृहस्पती राहुयुतो विरुद्धः।
शेषेषु देशेषु न चास्ति दोषः
सर्व्वत्र कार्य्यं सुनयो वदन्ति॥"

इति वृहस्राजमार्त्तण्डवचनमिति केचिद्वदन्ति॥

राहुस्पर्शः, पुं, (राहोः स्पर्शो यत्र।) उपरागः। इति हलायुधः॥

राहुहा, [न्] पुं, ( राहुं हन्तीति । हन् + क्विप् । ) विष्णुः । इति हेमचन्द्रः ॥

राहूच्छिष्टः, पुं, ( राहोरुच्छिष्टः । ) लशुनः । इति त्रिकाण्डशेषः ॥ (अस्य विवरणन्तु रसोनशब्दे द्रष्टव्यम् ॥ )

राहूत्सृष्टः, पुं, ( राहुणा उत्सृष्टः परित्यक्तः । ) लशुनः । इति हारावली । २२३ ॥ ( अस्य विवरणं रसोनशब्दे द्रष्टव्यम् ॥ )

रि, श गतौ । इति कविकल्पद्रुमः ॥ ( तुदा०-पर०-सक०-सेट् । ) रेफादिः । श, रियति । इति दुर्गादासः ॥

रिक्तं, क्ली, (रिच् + क्तः ।) शून्यम् । वनम् । इति मेदिनी । ते, ५० ॥

रिक्तं, त्रि, (रिच् + क्तः ।) निर्धनम् । इति शब्दरत्नावली ॥ ( शून्यम् । यथा, मनुः ।८।४०५।
"भाण्डपूर्णानि यानानि तार्य्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किञ्चित् पुमांसश्चापरिच्छदाः ॥")

रिक्तकं, त्रि, ( रिक्त + कन् । ) शून्यम् । इत्यमरः । ३ । १ । ५६ ॥ (यथा, मनुः । ८ । ४०४ ।
"पणं यानं तरे दाप्यं पौरुषोऽर्द्धपणं तरे ।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान् ॥")

रिक्ता, स्त्री, ( रिच् + क्तः । टाप् । ) तिथिभेदः । सा तु चतुर्थी नवमी चतुर्द्दशी च । यथा,—
"नन्दा भद्रा जया रिक्ता पूर्णा च तिथयः क्रमात् ॥"
इति तिथ्यादितत्त्वम् ॥

कर्म्मसु तस्या निषेधविधी यथा,—
"नन्दा भद्रा जया रिक्ता पूर्णा नामसदृकफलाः ।"

न रिक्ता सर्व्वकर्म्मसु । इति ज्योतिःसारः ॥
"चन्द्रे चार्कं कुजार्किशुक्रवियुते मध्येऽथवा पापयोः लग्ना च व्यतिपातवैधृतिदिनं विहाय रिक्तां तिथिम् ।
क्रूराहायनचैत्रपौषरहिते लग्नांशके मानुषे ॥
रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता ।
शनैश्चरदिने चैव यदि रिक्ता तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या पतिसन्तानवर्द्धिनी ॥"
इति दीपिका ॥

"षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च तस्मिन्नरे ॥"
इति भुजबलभीमः ॥

"द्वादशी सप्तमी नन्दा रिक्तासु पञ्चपर्व्वसु ।
बलमायुर्यशो हन्यात् शिशूनामन्नभक्षणम् ॥"
इति ज्योतिश्चिन्तामणिः ॥

"पूर्ब्बांशाककसपेन्द्रलवहितेष्वन्त्येष्वरिक्ते तिथौ षष्ठे मासि सितेन्दुजीवदिवसे गोमध्यमीनोदये ।
संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्द्दने ।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम् ॥
रिक्तां पञ्चदशीञ्चैव सौरिभौमदिने तथा ।
एवं सुनिश्चिते काले विद्यारम्भन्तु कारयेत् ॥"
इति विष्णुधर्म्मोत्तरः ॥

"पूर्ब्बाग्नियाम्यपवित्रिचित्रमित्रवाय्वभेषु
रिक्ताष्टमीं विगतचन्द्रतिथिं विहाय ।
द्वाग्नालिगोमसुरद्ये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥"
इति दीपिका ॥

"चन्द्रार्कयोर्भवेत् पूर्णा कुजे भद्रा जया गुरौ ।
बुधमन्दौ च नन्दायां शुक्रे रिक्तान्वता तिथिः ॥"
इति भीमपराक्रमः ॥

"सर्व्वत्र कार्य्ये बुधजीवशुक्राः
केन्द्रत्रिकोणोपगताः प्रशस्ताः ।
तृतीयलाभारिगताश्च पापा-
स्तिथिर्विरिक्ता शुभदस्य चाहः ॥"
इति दीपिका ॥

"चतुर्थी नवमी चैव रिक्ता चैव चतुर्द्दशी ।
शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया ।
गुरौ पूर्णा च संयुक्ता सिद्धियोगाः प्रकीर्त्तिताः ॥
बुधमन्दगता नन्दा कुजे भद्रा जया गुरौ ।
भृगुरिक्तान्वितं प्रोक्तं पूर्णा च रविचन्द्रयोः ॥"
इति ज्योतिःसागरसारः ॥

"षष्ठ्यष्टमीद्वादशीषु न गच्छेत्त्रिदिनस्पृशि ।
पूर्णिमाप्रतिपद्दर्शरिक्तावमदिनेषु च ।
तथा यमद्वितीयायां यात्रायां मरणं भवेत् ॥"
इति सत्कृत्यमुक्तावली ॥

रिक्थं, क्ली, ( रिङ्क्ते बहिर्गच्छति नश्यतीति । रिच् + "पातृतुदिवचिरिचिसिचिभ्यस्थक् ।" उणा० २ । ७ । इति थक् । ) धनम् । इत्यमरः । २ । ६ । ९० ॥ ( यथा, मनुः । ८ । २७ ।
"बालदायादिकं रिक्थं तावत् राजानुपालयेत् ।
यावत् स स्यात् समावृत्तो यावच्चातीतशैशवः ॥")

रिक्थहारी, [न्] त्रि, ( रिक्थं हरतीति । हृ + णिनिः । ) दायादः । धनहारी । यथा ।
"यदासौ नियुक्तो देवरादिः स्वयमप्यपुत्त्रोऽपुत्त्रस्य क्षेत्रे स्वपरपुत्त्रार्थं प्रवृत्तोऽयं जनयति स द्विपितृको द्व्यामुष्यायणो द्वयोरपि रिक्थहारी पिण्डदाता च ।" इति मिताक्षरायां दायभागः ॥

रिक्थी, [न्] त्रि, (रिक्थमस्यास्तीति । रिक्थ + इनिः । ) धनहारी । धनी । ( यथा, याज्ञवल्क्यः । २ । २६ ।
"योऽभियुक्तः परेतः स्यात् तस्य रिक्थी तमुद्धरेत् ॥")

रिचा, स्त्री, लिक्षा । यूका । इति हेमचन्द्रः । ४ । २७४ ॥

रिख, ऋ सर्पणे । इति कविकल्पद्रुमः ॥ ( भ्वा०-पर०-सक०-सेट् । ) ऋ, रिखति । इति दुर्गादासः ॥

रिग, ऋ गतौ । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् । ) ऋ, रिगति । इति दुर्गादासः ॥

रिङ्खणं, क्ली, ( रिखि + ल्युट् । ) स्खलनम् । इति हेमचन्द्रः । ६ । १५६ ॥ ( यथा,—
"सुखाय रिङ्खणविधिं पादचंक्रमकर्म्मणः ।
कुमारः पञ्चवर्षीयः कलाभ्यासं विधास्यति ॥")

रिङ्गणं, क्ली, ( रिगि + ल्युट् । ) स्खलनम् । इत्यमरः । "द्वे धर्म्मानुपचितादप्रतिष्ठायां स्वकीयविधानादन्यथाभावे इत्यर्थः । चौचित्यात् प्रिच्छिलादेश्च स्खलने । इति रमानाथः ॥ धर्म्मविचलनं रिङ्गणमिति स्वामी ॥ बालानां हस्तपादाभ्यां चलनं रिङ्खणम् । पिच्छिलादौ पतनं स्खलनमित्यन्ये । एतन्मते भेदेऽप्यभेदोपचारेण समे इत्युक्तम् । रग रिग लिगि गतौ अगद् । रिङ्खणमिति पाठे रखि रख रिखि सर्पणे इत्यस्य रूपम् ।" इति भरतः ॥

रिच, कि सम्पर्कवियोगयोः । इति कविकल्पद्रुमः ॥ ( चुरा०-पक्षे भ्वा०-पर०-अक०-सेट् । ) कि, रेचयति रेचति । रिङ्क्ते रिपुर्यदाक्रान्तो धर्म्मसेतुश्च रेचति । रेचयन्ति च तन्नार्य्य इति हलायुधः । इति दुर्गादासः ॥

रिच, इर् ध ञ औ विरेके । इति कविकल्पद्रुमः ॥ (रुधा०-उभ०-अक०-अनिट् ।) विरेकः पौनःपुन्येन पुरीषोत्सर्गः । इति चतुर्भुजः । इर्, अरिचत् अरैक्षीत् । ध ञ, रिणक्ति रिङ्क्ते अतिसारकी । औ, रेक्ता । इति दुर्गादासः ॥

रिज, ङ भर्ज्जने । इति कविकल्पद्रुमः ॥ ( भ्वा०-आत्म०-सक०-सेट् । ) भर्ज्जने भर्ज्जने । ङ, रेजते । इति दुर्गादासः ॥

रिधमः, पुं, कामः । वसन्तः । इति विश्वः ॥

रिपुः, पुं, ( अनिष्टं रपतीति । रप वाचि + "रपेरिच्चोपधायाः ।" उणा० १ । २७ । इति कुः इकारश्चोपधायाः । "रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । 'इधि: किच्च ।' उणा० १ । १४ । इति बाहुलकादुप्रत्ययः । रिपतिं केचित् पठन्ति । तत्र बाहुलकादेव ककारस्य पकारः । रिपति मोक्षार्थं युध्यते हिनस्ति वा निन्दति च सत्पुरुषैः ।" इति निघण्टुटीकायां देवराजयज्वा । ३ । २४ । ४ । ) शत्रुः । इत्यमरः । २ । ८ । १० ॥ ( यथा, हितोपदेशे ।
"न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥" )

शरीरस्थषड्रिपवो यथा । कामः क्रोधः लोभः मोहः मदः मात्सर्य्यञ्च । तथा हि ।
"आश्राय योगमवजित्य च वैरिषट्कमावध्य चेन्द्रियगणं मनसि प्रसन्ने ॥"
इत्यादि तन्त्रसारे भुवनेश्वरीस्तोत्रम् ॥ * ॥

चोरकनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥ लग्नापेक्षया षष्ठस्थानम् । तत्पर्य्यायः । षट्कोणम् २ रिपुमन्दिरम् ३ । यथा,—
"धीस्थानं पञ्चमं ज्ञेयं यामित्रं सप्तमं स्मृतम् ।
तुर्य्यं तूर्य्यं तथाख्यातं षट्कोणं रिपुमन्दिरम् ॥"

अपि च ।
"सुनीचगेऽस्तगेऽपि वा रिपौ व्यये स्थिता ग्रहाः ।
तथा फलं प्रकीर्त्तितं समस्तमेव सूरिभिः ॥"

अन्यच्च ।
"अरातिमन्दिरयोः षष्ठे चाष्टमे न्यायरश्मयोः ।
अयस्य द्वादशस्थाने वैपरीत्येन चिन्तनम् ॥"
इति ज्योतिस्तत्त्वम् ॥

(शुचपुत्रस्य शिष्टेः पुत्रः। यथा, हरिवंशे। २। १४-१५।
"तस्मात् शिष्टिश्च भव्यश्च ध्रुवात् शम्भुर्व्यजायत।
शिष्टेराधत्त सुच्छाया पञ्चपुत्रानकल्मषान्॥
रिपुं रिपुञ्जयं पुष्यं वृकलं वृकतेजसम्॥"
यदोः पुत्रः। यथा, भागवते। ९। २३। २०।
"यदोः सहस्रजित् क्रोष्टा नलो रिपुरिति श्रुताः॥")

रिपुघातिनी, स्त्री, (रिपुं हन्तीति। हन + णिनिः।) लताविशेषः। कुचुर इति भाषा। यथा,
"कुचिका बहुविल्लीर्या कुचिका रिपुघातिनी॥"
इति शब्दचन्द्रिका॥

रिफ, प श वधे। इति कविकल्पद्रुमः॥ (तुदा०-पर०-सक०-सेट्।) नोपधः। प श, रिम्फति रिरिम्फ। षष्ठस्वरादिरयमित्यन्ये। इति दुर्गादासः॥

रिप्फं, क्ली, लग्नापेक्षया द्वादशराशिः। यथा,—
"कर्मस्थानञ्च दशमं खं मेषूरणमास्पदम्।
छिद्राख्यमष्टमं स्थानं रिप्फाख्यं द्वादशं
स्मृतम्॥"
तत्र चिन्तनीयं यथा,—
"प्राप्तायावय चिन्तयेद्भवगृहे रिप्फेऽव्यये
मन्त्रियमौ
सौख्यस्वामिसुतौ चितेषपचितिस्त्वेषां चतिस्त्र-
व्यया॥"
इति ज्योतिस्तत्त्वम्॥

रिप्रः, त्रि, (रीङ् स्रवणे + "लीरीङोर्ह्रस्वश्च पुट् च तरौ श्लेषणकुत्सितयोः।" उणा० ५। ५५। इति रप्रत्ययः। धातोर्ह्रस्वः। प्रत्ययस्य पुट् च।) अधमः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (यथा, ऋग्वेदे। ८। ७८। १।
"शृम्भाति रिप्रमविरस्य ताम्ना।'
"रिप्रं अनुपादेयत्वेन पापरूपम्॥" इति तद्भाष्ये सायणः॥ क्ली, पापम्। यथा, ऋग्वेदे। १०। १७। १०।
"विश्वं हि रिप्रं प्रवहन्ति देवीः॥"
"देवीर्देव्यः देवनशीला आपः विश्वं सर्वं रिप्रं पापं प्रवहन्ति पुरुषसकाशात् प्रगमयन्ति अपनयन्तीति यावत्।" इति तद्भाष्ये सायणः॥)

रिप्रवाहः, त्रि, पापवाहकः। यथा,—
"क्रव्यादमग्निं प्रहिणोमि दूरम्।
यमराज्यं गच्छतु रिप्रवाहः॥"
इति भवदेवभट्टोक्तकुशपुत्तलिकादाहपद्धतिः॥
"रिप्रं पापं वहतीति रिप्रवाहः।" इति तट्टीकायां गुणविष्णुः॥ "स प्रहितः क्रव्यादग्निः यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु। किम्भूतः रिप्रवाहः रिप्रमिति पापनाम। रिप्रं पापं वहति नाशयति रिप्रवाहः।" इति वाजसनेयसंहिताभाष्ये महीधरः। ३५। १९॥
"रिप्रवाहः रिप्रं पापं तस्य वोढ़ा सोऽग्निः यमराज्ञः यमो राजा येषां तान् यमराजकान् अन्यप्रदेशान् गच्छतु प्राप्नोतु।" इति ऋक्भाष्ये सायणः। १०। १६। ९॥)

रिफ, कुत्सने। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) सौत्रधातुरयम्। रिफ्फः रेफः। इति दुर्गादासः॥

रिफ, श अर्पे। इति कविकल्पद्रुमः॥ (तुदा०-पर०-सक०-सेट्।) श, रिफति। अर्पो दानश्लाघाहिंसानिन्दायुद्धानि। इति दुर्गादासः॥

रिब, इ गत्याम्। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) इ, रिम्बति। इति दुर्गादासः॥

रिभ, रवे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-अक०-सेट्।) विरिभ्यः। इति दुर्गादासः॥

रिमेदः, पुं, अरिमेदः। इति राजनिर्घण्टः॥

रिरी, स्त्री, पित्तलः। इति हेमचन्द्रः। ४। ११४॥

रिव, इ व्रजे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक० सेट्।) इ, रिण्वति। व्रजो गतिः। इति दुर्गादासः॥

रिश, औ श हिंसे। इति कविकल्पद्रुमः॥ (तुदा०-पर०-सक०-अनिट्।) औ, अरिक्षत्। श, रिशति। रेक्ष्यति। इति दुर्गादासः॥

रिश्यः, पुं, (रिश्यते हिंस्यते इति। रिश् + क्यप्।) मृगः। इति त्रिकाण्डशेषः॥

रिष, वधे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) रेषति। इति दुर्गादासः॥

रिषिः, पुं, ऋषिः। ऋषन्ति ज्ञानसंसारयोः पारं गच्छन्ति ऋषयः। ऋषी श गतौ नाम्नीति किः। रिषिर्हंसादिश्च। विद्याविदग्धमतयो रिषयः प्रसिद्धाः। इति प्रयोगात्। स्त्रियां ऋषी च। इत्यमरटीकायां भरतः॥

रिष्टं, क्ली, (रिष् + क्तः।) क्षेमम्। कल्याणम्। अशुभम्। अमङ्गलम्। (यथा, मार्कण्डेये। ५०। ८९।
"स्थालीपिधाने यत्राग्निर्दत्तो दर्व्वीफणेन वा।
गृहे तत्र हि रिष्टानामशेषाणां समाश्रयः॥")
अभावः। नाशः। इत्यमरभरतौ॥ अशुभस्याभावः। इति केचित्। इति भरतः॥ पापम्। इत्यजयः॥ तद्वति, त्रि॥

रिष्टः, पुं, (रिष् + क्तः।) खड्गः। फेणिलः। स तु रक्तशिग्रुः। इति मेदिनी। टे, २७॥

रिष्टकः, पुं, (रिष्ट एव। स्वार्थे कन्।) रक्तशिग्रुः। इति शब्दरत्नावली॥

रिष्टिः, पुं, (रेषति हिनस्तीति। रिष् + क्तिच्।) खड्गः। इति मेदिनी। टे, २७॥

रिष्टिः, स्त्री, (रिष् + क्तिन्।) अशुभम्। इति मेदिनी। टे, २७॥ शस्त्रभेदः। इति शब्दरत्नावली॥

रिष्यः, पुं, (रिष्यते इति। रिष् + क्यप्।) मृगविशेषः। यथा,—
"ऋष्य ऋश्यो रिश्यो रिष्य एणः स्यादेणकोऽपि च।"
इति शब्दरत्नावली॥

रिष्वः, त्रि, (रिष वधे + "सर्व्वनिघृष्वरिष्व।" उणा० १। १५३। इति वन्प्रत्ययेन साधुः।) वधकः। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥

रिह, वधे। इति कविकल्पद्रुमः॥ (भ्वा०-पर०-सक०-सेट्।) रेहति। इति दुर्गादासः॥

री, ओ ङ य स्रवणे। इति कविकल्पद्रुमः॥ (दिवा०-आत्म०-अक०-अनिट्।) ओ, रीणः। ङ य, रीयते पयः। इति दुर्गादासः॥

री, शि रवे। वधे। गतौ। इति कविकल्पद्रुमः॥ (क्र्या०प्रा०-पर०-अक०-सक० च-अनिट्।) शि, रिणाति रीणः रिणिः। रवः शब्दः। तथा च कातन्त्रादौ री गतिरेषणयोः। रेषणं वृकध्वनिरिति रमानाथः। रिणाति रेषते वृकः। इति शब्दार्थे भट्टमल्लः। इति दुर्गादासः॥

री, स्त्री, (री + क्विप्।) गतिः। इति शब्दरत्नावली॥ रवः। वधः। इति रीधात्वर्थदर्शनात्॥

रीण्या, स्त्री, घृणा। यथा। मोघो रीण्या जुगुप्सा च घृणीया घृणिया घृणेति वाचस्पतिः। अयन्तु लज्जायां प्रसिद्धः प्रमादात् घृणायां प्रयुक्त इति कलिङ्गः। इत्यमरटीकायां भरतः॥

रीठा, स्त्री, रीठाकरञ्जः। इति राजनिर्घण्टः॥

रीठाकरञ्जः, पुं, स्वनामख्यातवृक्षः। तत्पर्य्यायः। गुच्छकः २ गुच्छपुष्पकः ३ रीठा ४ गुच्छफलः ५ अरिष्टः ६ मङ्गल्यः ७ कुम्भबीजकः ८ प्रकीर्य्यः ९ सोमवल्कः १० फेणिलः ११। अस्य फलगुणाः। तिक्तत्वम्। उष्णत्वम्। कटुत्वम्। स्निग्धत्वम्। वातकफकुष्ठकण्डूतिविषविस्फोटनाशित्वञ्च। इति राजनिर्घण्टः॥

रीढ़कः, पुं, पृष्ठवंशः। इति हेमचन्द्रः। ३। २९५॥

रीढ़ा, स्त्री, (रिह वन्धे + औणादिकः क्तः।) अवज्ञा। इत्यमरः। १। ७। २३॥

रीणं, त्रि, (री + क्तः। ओदितश्चेति नः।) स्रुतजलादि। क्षरितम्। इत्यमरः। ३। १। ९२॥

रीतिः, स्त्री, (री + क्तिच् क्तिन् वा।) आरकूटः। (तत्पर्य्यायगुणा यथा,—
"पित्तलन्त्वारकूटं स्यादारो रीतिश्च कथ्यते।
राजरीतिर्ब्रह्मरीतिः कपिला पिङ्गलापि च॥
रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च।
पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः॥
संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)
प्रचारः। स्यन्दः। इत्यमरः। २। ९। ९७॥ ३। ३। ६८॥ लोहकिट्टम्। इति मेदिनी। ते, ५०॥ दग्धस्वर्णादिमलम्। इति धरणिः॥ सीमा। स्रवणम्। गतिः। स्वभावः। शेषस्य पर्य्यायः। रूपम् २ लक्षणम् ३ भावः ४ आत्मा ५ प्रकृतिः ६ सहजः ७ रूपतत्त्वम् ८ धर्म्मः ९ सर्गः १० निसर्गः ११ शीलम् १२ सतत्त्वम् १३ संसिद्धिः १४। इति हेमचन्द्रः॥ (यथा, कथासरित्सागरे। १३। ६२।
"निशान्तशिल्पकाकर्णरीतिस्तद्यो रवक्रमः॥"

स्तुतिः । यथा, ऋग्वेदे । २ । २४ । १४ ।
"महीव रीतिः शवसासरत् पृथक् ॥"
"महीव रीतिः महती स्तुतिरिव ।" इति तद्भाष्ये सायणः ॥) काव्यस्यात्मा । इति वामनसूत्रम् ॥ गुणभेदेन तद्विभागमाह ।
"ओजःप्रसादमाधुर्य्यगुणत्रितयभेदतः ।
गौड़वैदर्भपाञ्चालरीतयः परिकीर्त्तिताः ॥"
ओजःप्रभृतीनां लक्षणानि यथा,—
"ओजः समासभूयस्त्वं मांसलं पदडम्बरम् ।
व्यक्तार्थपदमव्याख्यं प्रसादः परिकीर्त्तितः ॥
शब्दार्थयोस्तु रसवन्मधुरं परिकीर्त्तितम् ।
सर्व्वलोकावगम्यं यद्ग्राम्यं तदभिधीयते ॥
सुश्रावमपि गम्भीरं प्रसन्नमुपनागरम् ॥"
ग्राम्यं यथा,—
"कन्ये मन्येऽत्यन्तं धन्यो यस्त्वामत्र विवाहयेत् ।
नात्येन तपसा लभ्यः सुन्दरस्त्रीसमागमः ॥"
उपनागरं यथा—
"तन्वि त्वदधरं स्वादु नाविदन्नविदो जनाः ।
वसुधायां सुधाभावाम्नूनं स्वर्गं यियासवः ॥
शब्दालङ्कारकं तत् स्यादुपदमनुप्रासभास्वरम् ।
वर्णावृत्तिरनुप्रासः पदे पादे विधीयते ।
पदावृत्तिस्तु यमकमादिमध्यान्तसर्व्वगम् ॥" * ॥
क्रमेण रीतित्रयाणामुदाहरणानि ।
"गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणिस्फूर्ज्जत्फुत्कृतिभीतिसम्भृतिचमत्कारस्फुरत्-
सम्भ्रमा ।
आनन्दामृतवापिका विदधती चित्ते गिरीशप्रभो-
र्व्वो पायान्नवसङ्गमे भगवती लज्जावती
पार्व्वती ॥
भवतो विरहव्याधिमधिगम्य ससम्भ्रमा ।
कामिनी यामिनीकान्तं कृतान्तमिव पश्यति ॥
हन्तासि सन्तापनिहत्तयेऽस्याः
किं तालहन्तं तरलीकरोषि ।
उत्ताप एषोऽन्तरतापहेतु-
र्न तन्नुवो नयनजापनेयः ॥"
इति काव्यचन्द्रिका ॥
(अस्या अन्यद्विवरणं साहित्यदर्पणे ९ परिच्छेदे द्रष्टव्यम् ॥)
रीतिकं, क्ली, पुष्पाञ्जनम् । इति राजनिर्घण्टः ॥
रीतिका, स्त्री, कुसुमाञ्जनम् । इति शब्दचन्द्रिका ॥ पित्तलञ्च ॥ (यथा, बृहत्संहितायाम् । ५७।८।
"अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिका-
भागः ।
मयकथितो योगोऽयं विज्ञेयो वज्रसंघातः ॥")
रीतिपुष्पं, क्ली, ( रीतेः पित्तलस्य पुष्पमिव । तदाकृतित्वात् । ) कुसुमाञ्जनम् । इत्यमरः । २ । ९ । १०३ ॥
रीव, ऋ ञ चौवे । इति कविकल्पद्रुमः ॥ (भ्वा०-उभ०-सक०-सेट् । ) ऋ, अरिरीवत् । ञ, रीवति रीवते । चीवो ग्रहणसंवरणयोः । इति दुर्गादासः ॥

रु, ङ वधे । गत्याम् । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् । ) ङ, रवते । इति दुर्गादासः ॥
रु, ल ध्वनौ । इति कविकल्पद्रुमः ॥ ( अदा०-पर०-अक०-सेट् । ) ल, रौति रवीति पची । इति दुर्गादासः ॥
रुः, पुं, शब्दः । इत्येकाक्षरकोषः ॥
रुकः, त्रि, बहुप्रदः । इति शब्दमाला ॥
रुक्, [ च् ] स्त्री, ( रुच् + भावे क्विप् । ) शोभा । ( यथा, माघे । ४ । ६६ ।
"दधद्भिरभितस्तटौ विकचवारिजाम्बूनदै-
र्व्विनोदितदिनक्लमाः कृतरुचश्च जाम्बूनदैः ॥")
द्युतिः । ( यथा, किराते । ५ । ४५ ।
"क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम् ॥" )
इच्छा । इति मेदिनी ॥ ( यथा, महाभारते । १३ । १२४ । २८ ।
"नानाबुद्धिरुचो लोके मनुष्यान्नूनमिच्छसि ।
गृहीतुं स्वगुणैः सर्व्वांस्तेनासि हरिणः कृशः ॥"
तेजः । यथा, रघुः । ९ । ६ ।
"अनुययौ यमपुण्यजनेश्वरौ
सवरुणावरुणाग्रसरं रुचा ॥")
शारिकामुकवाक् । इति शब्दरत्नावली ॥
रुक्, [ ज् ] स्त्री, ( रुज् + क्विप् । ) रोगः । इत्यमरः ।२।६।५१ ॥ (यथा, भागवते । ६ । १ । ८ ।
"दोषस्य दृष्ट्वा गुरुलाघवं यथा
भिषक् चिकित्सेत रुजां निदानवित् ॥"
रुजति पीड़यतीति । पीड़ादायके, त्रि । यथा, महाभारते । ५ । ८४ । १ ।
"प्रयान्तं देवकीपुत्रं परवीररुजो दश ।
महारथा महाबाहुमन्वयुः शस्त्रपाणयः ॥"
अथवा परस्य वीराणां रुक् येरिति ॥ )
रुक्प्रतिक्रिया, स्त्री, ( रुजः प्रतिक्रिया निरसनम् । ) चिकित्सा । इत्यमरः । २ । ३ । ५० ॥
रुक्मं, क्ली, ( रोचते शोभते इति । रुच् + "युजिरुचितिजां कुश्च । उणा० १ । १४५ । इति मक् कवर्गश्चान्तादेशः । ) काञ्चनम् । ( यथा, रामायणे । २ । ७० । २१ ।
"रुक्मनिष्कसहस्रे द्वे षोड़शाश्वशतानि च ।
सत्कृत्य कैकयीपुत्रं केकयो धनमादिशत् ॥")
धुस्तूरम् । इत्यमरः ॥ लोहम् । इति मेदिनी । मे, २८ ॥ ( अस्य पर्य्यायो यथा,—
"कृष्णायसं काललोहं रुक्मं तत्तीक्ष्णमप्यथ ॥"
इति वैद्यकरत्नमालायाम् ॥ )
नागकेशरम् । इति राजनिर्घण्टः ॥ ( वर्णे, पुं । इति उज्ज्वलदत्तः । १ । १४५ ॥ दीप्तिशीले, त्रि । यथा, ऋग्वेदे । ५ । ६१ । १२ ।
"दिवि रुक्म इवोपरि ॥"
"दिवि द्युलोके रुक्मो रोचमान आदित्य इव ।"
इति तद्भाष्ये सायणः ॥ )
रुक्मकारकः, पुं, ( रुक्मं स्वर्णालङ्कारं करोतीति । कृ + "कर्म्मण्यण् ।" ३ । २ । १ । इत्यण् ।

ततः स्वार्थे कन् । ) स्वर्णकारः । इत्यमरः । २ । १० । ८ ॥
रुक्माङ्गदः, पुं, राजविशेषः । यथा । अस्ति कलिङ्गविषये रुक्माङ्गदो नाम नरपतिर्द्दिग्विजयव्यापारक्रमेणागत्य चन्द्रभागानदीतीरे समावेशितकटको वर्त्तते । इत्यादि हितोपदेशे ३ परिच्छेदः ॥
रुक्मिणी, स्त्री, (रुक्मो वर्णोऽस्त्यस्या इति । रुक्म + इनिः । ङीप् । ) लक्ष्मीस्वरूपकृष्णमहिषीविशेषः । तत्पर्य्यायः । ईः २ रमा ३ सिन्धुजा ४ वामा ५ चला ६ हीरा ७ चञ्चला ८ वृषाकपायी ९ चपला १० इन्दिरा ११ लक्ष्मीः १२ पद्मालया १३ पद्मा १४ कमला १५ श्रीः १६ हरिप्रिया १७ । इति जटाधरः ॥ अस्या विवरणं यथा,
"विदर्भराजो धर्म्मात्मा भीष्मको नाम धार्म्मिकः ।
बभूवुस्तस्य पुत्रास्तु नाम्ना रुक्मादयः शुभाः ॥
तेषामवरजा कन्या रुक्मिणी रुक्मवर्णिनी ।
कमलांशेन सम्भूता सर्व्वलक्षणशोभिता ॥
राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि ।
साक्षाल्लक्ष्मीस्तु विज्ञेया प्राकट्येनैव पार्व्वति ॥"
इति पाद्मोत्तरखण्डे ६७ अध्यायः ॥ * ॥
( रुक्मिण्या सह शिशुपालस्य विवाहघोषणा श्रीकृष्णस्य रुक्मिणीहरणं कृतायाश्च तस्यां यादवैः सह राज्ञां तुमुलयुद्धादिकं हरिवंशे । ११६ अध्याये द्रष्टव्यम् ॥ * ॥ नारदस्य रुक्मिण्यै पारिजातपुष्पप्रदानवृत्तान्तं तत्रैव च १२२ अध्याये द्रष्टव्यम् ॥ * ॥ अस्याः सन्ततिनामानि यथा तत्रैव । १६० । ४—६ ।
"—————रुक्मिणीतनयान् शृणु ।
प्रद्युम्नः प्रथमं जज्ञे शम्बरान्तकरः सुतः ॥
द्वितीयश्चारुदेष्णश्च वृष्णिसिंहो महारथः ।
चारुभद्रश्चारुगर्भः सुदंष्ट्रो द्रुम एव च ॥
सुषेणश्चारुगुप्तश्च चारुविन्दश्च वीर्य्यवान् ।
चारुबाहुः कनीयांश्च कन्या चारुमती तथा ॥")
स्वर्णक्षीरी । इति राजनिर्घण्टः ॥
रुक्मिणीव्रतं, क्ली, ( रुक्मिण्या व्रतम् । ) व्रतविशेषः । यथा,—
सूत उवाच ।
"जामदग्न्यः समाकर्ण्य रमां तां पुत्रगर्हिणीम् ।
कल्किरभिमतं बुद्धा कारयद्रुक्मिणीव्रतम् ॥
व्रतेन तेन च रमा पुत्राढ्या सुभगा सती ।
सर्व्वभोगेन संयुक्ता बभूव स्थिरयौवना ॥
शौनक उवाच ।
विधानं ब्रूहि मे सूत व्रतस्यास्य च सत्फलम् ।
पुरा केन कृतं धर्म्म्यं रुक्मिणीव्रतमुत्तमम् ॥
सूत उवाच ।
शृणु ब्रह्मन् ! राजपुत्री शर्म्मिष्ठा वार्षपर्व्वणी ।
अवगाह्य सरोनीरं सोमं हरमपश्यत ॥
सा सखीभिः परिवृता देवयान्या च संगता ।
शम्भुभीत्या समुत्थाय पर्य्यधुर्व्वसनं द्रुतम् ॥
तत्र शुक्रस्य कन्या या वस्त्रव्यत्यासमात्मनः ।
संवस्य कुपिता प्राह वचनं शृणु भिक्षुकि ! ॥

इति दानवकन्या सा दासीभिः परिवारिता ।
तां तत्रा वाससा बद्धा कूपे क्षिप्त्वा गता
गृहम् ॥
तां कूपमध्ये रुदतीं जलार्थी नहुषात्मजः ।
करे धृत्वा समुद्धृत्य प्राह का त्वं वरानने ॥
सा शुक्रपुत्त्री वसनं परिधाय ह्रिया भिया ।
शर्म्मिष्ठया कृतं सर्व्वं प्राह राजानमीश्वरी ॥
ययातिस्तदभिप्रायं ज्ञात्वानुज्ञाप्य शोभनाम् ।
आश्वास्य तां ययौ गेहं तस्याः परिणयादृतः ॥
सा गत्वा भवनं शुक्रं प्राह शर्म्मिष्ठया कृतम् ।
तच्छ्रुत्वा कुपितं विप्रं वृषपर्व्वाह सान्त्वयन् ॥
रक्ष मां रक्षय विभो रोषो यद्यस्ति ते मयि ।
शर्म्मिष्ठां दास्यप्रणतां कुरु यन्मनसेप्सितम् ॥
राजानं प्रणतं पादे पितुर्दृष्ट्वा रुषाब्रवीत् ।
देवयानी त्वियं कन्या मम दासी भवत्विति ॥
समानीय तदा राजा शास्त्रे तां विनियुज्य सः ।
ययौ निजगृहं ज्ञानी देवं परमकं स्मरन् ॥
ततः शुक्रसमानीय ययातिं प्रतिलोमकम् ।
तस्मै ददौ तां विधिवत् देवयानीं तया सह ॥
इत्थं प्राह नृपं विप्रोऽप्येनां राजसुतां यदि ।
शयने नयसि सद्यो जरा त्वामुपभोक्ष्यति ॥
शुक्रस्यैतद्वचः श्रुत्वा राजा तां वरवर्णिनीम् ।
अशोके स्थापयामास देवयान्यनुगां भिया ॥
सा शर्म्मिष्ठा राजपुत्त्री दुःखशोकभयाकुला ।
नित्यं दासीशताकीर्णां देवयानीन्तु सेवते ॥
एकदा सा वनगता रुदती जाह्नवीतटे ।
विश्वामित्रं मुनिं सा तं ददर्श स्त्रीभिरावृतम् ॥
व्रतिनं पुण्यगन्धाभिः सुरूपाभिः सुवासितम् ।
कारयन्तं व्रतं माल्यधूपदीपोपहारकैः ॥
निर्म्मायाष्टदलं पद्मं वेदिकायां सुचित्रितम् ।
रम्भापोतैश्चतुर्भिस्तु चतुष्कोणं विराजितम् ॥
वाससा निर्म्मितगृहे स्वर्णपट्टैर्विचित्रिते ।
निर्म्मितश्रीवासुदेवं नानारत्नविभूषितम् ॥
पौरुषेण च सूक्तेन नानागन्धोदकैः शुभैः ।
पञ्चामृतैः पञ्चगव्यैर्यामलैर्हिङ्गोरितैः ॥
स्नापयित्वा भद्रपीठे कर्णिकायां प्रपूजयन् ।
पञ्चभिर्दशभिश्चापि षोडशैरुपचारकैः ॥
पाद्यमध्यश्रमहरं शीतलं सुमनोहरम् ।
परमानन्दजनकं गृहाण परमेश्वर ॥
दूर्व्वाचन्दनगन्धाढ्यमर्घ्यंयुक्तं प्रयत्नतः ।
गृहाण रुक्मिणीकान्त प्रपन्नस्य मम प्रभो ॥
नानातीर्थाहृतं वारि सुगन्धि सुमनोहरम् ।
गृहाणाचमनीयं त्वं श्रीनिवास श्रिया सह ॥
नानाकुसुमगन्धाढ्यं सुग्रथितमुत्तमम् ।
वक्षःशोभाकरं चारु माल्यं नय सुरेश्वर ॥
तन्तुसन्तानसन्धानरचितं वस्त्रं हरे ।
गृहाणावरणं शुद्धं निरावरण सप्रिय ॥
यज्ञसूत्रमिदं देव प्रजापतिविनिर्म्मितम् ।
गृहाण वासुदेव त्वं रुक्मिण्या रमया सह ॥
नानारत्नसमायुक्तं स्वर्णमुक्तादिभूषितम् ।
प्रियया सह देवेश गृहाणाभरणं मम ॥
दधिक्षीराज्यमधुपूपशर्करालड्डुकादिकान् ।

गृहाण रुक्मिणीनाथ सनाथं कुरु मां प्रभो ॥
कर्पूरागुरुगन्धाढ्यं परमानन्ददायकम् ।
धूपं गृहाण वरद वैदर्भ्या प्रियया सह ॥
भक्तानां गेहसक्तानां संसारध्वान्तनाशनम् ।
दीपमालोकय विभो जगदालोकनादर ॥
श्यामसुन्दर पद्माक्ष पीताम्बर चतुर्भुज ।
प्रपन्नं पाहि देवेश रुक्मिण्या सहिताच्युत ॥
इति तासां व्रतं दृष्ट्वा मुनिं नत्वा सुदुःखिता ।
शर्म्मिष्ठा मिष्टवचना कृताञ्जलिरुवाच ताः ॥
शर्म्मिष्ठोवाच ।
राजपुत्त्रीं दुर्भगां मां स्वामिना परिवर्ज्जिताम् ।
त्रातुमर्हथ हे देव्यो व्रतेनानेन कर्म्मणा ॥
श्रुत्वा तु ता वचस्तस्याः कारुण्याच्च कियत्
कियत् ।
पूजोपकरणं दत्त्वा कारयामासुरादरात् ॥
व्रतं कृत्वा तु शर्म्मिष्ठा लब्ध्वा स्वामिनमीश्वरम् ।
सूत्वा पुत्त्रान् सुसन्तुष्टा सम्भूत् स्थिरयौवना ॥
सीता चाशोकवनिकामध्ये सरमया सह ।
व्रतं कृत्वा पतिं लेभे रामं राक्षसनाशनम् ॥
इडरन्ध्रप्रसादेन कृत्वेदं द्रौपदी व्रतम् ।
पतियुक्ता दुःखमुक्ता बभूव स्थिरयौवना ॥
तथा रमा सिते पक्षे वैशाखे द्वादशीदिने ।
जामदग्न्याद्व्रतं चक्रे पूर्णं वर्षचतुष्टयम् ॥
पट्टसूत्रं करे बद्ध्वा भोजयित्वा द्विजान् बहून् ।
भुक्त्वा हविष्यं क्षीरान्नं सुमिष्टं स्वामिना सह ॥
बुभुजे पृथिवीं सर्व्वामपूर्व्वां स्वजनैर्वृता ।
सा पुत्त्रौ सुषुवे साध्वी मेघमालबलाहकौ ॥
देवानामुपकर्त्तारौ यज्ञदानतपोव्रतौ ।
महोत्साहौ महावीर्य्यौ सुभगौ कल्किसम्मतौ ॥
व्रतवरमिति कृत्वा सर्व्वसम्पत्समृद्धा
भवति विदितत्त्वा पूजिता पूर्णकामा ।
हरिचरणसरोजद्वन्द्वभक्त्यैकताना
व्रजति गतिमपूर्व्वां ज्ञानविज्ञैरगम्याम् ॥”
इति कल्किपुराणे रुक्मिणीव्रतम् ३१ अध्यायः ॥
रुक्मिदर्पः, पुं, ( रुक्मिणि भीष्मकपुत्त्रे दर्पो यस्य सः । तस्य रुक्मिनाशकत्वात् ।) बलदेवः । इति हलायुधः ॥
रुक्मिदारी, [ न् ] पुं, ( रुक्मिणं दारयतीति । दृ + णिच् + णिनिः । ) बलदेवः । इति त्रिकाण्डशेषः ॥
रुक्मिभित्, [ द् ] पुं, (रुक्मिणं भिनत्तीति । भिद् + क्विप् । ) बलदेवः । इति हेमचन्द्रः । २ । १३८ ।
रुक्मी, [ न् ] पुं, ( रुक्मं वर्णविशेषोऽस्यास्तीति । रुक्म + इनिः । ) भीष्मकराजज्येष्ठपुत्त्रः । यथा,
“राजासीद्भीष्मको नाम विदर्भाधिपतिर्महान् ।
तस्य पञ्चाभवन् पुत्त्राः कन्यैका रुचिरानना ॥
रुक्म्यग्रजो रुक्मरथो रुक्मबाहुरनन्तरः ।
रुक्मकेशो रुक्ममाली रुक्मिण्येषां स्वसा सती ॥”
इति श्रीभागवते १० स्कन्धे ५२ अध्यायः ॥
( रुक्मिणीहरणानन्तरं कृष्णेन सहास्य युद्धादिविवरणं हरिवंशे ११७ अध्याये तथा प्रद्युम्नेन सहास्य कन्यापरिणयप्रस्तावात् अनिरुद्धेन सहास्य पौत्र्याः परिणयकाले बलदेवहस्तेनास्य मृत्युविवरणञ्च ११८ अध्याये विस्तरशो द्रष्टव्यम् ॥ )
रुक्मिणी, [ न् ] स्त्री, मलम् । इति केचित् ॥
रुग्णः, त्रि, अप्रेम । अचिक्कणः । रुक्षधातोरौणादिकसप्रत्ययेन निष्पन्नः । इत्युणादिकोषः ॥
(नीरसः । तद्यथा, वायुस्वरूपवर्णने ।
“दोषधातुमलादीनां नेता शीघ्रः समीरणः ।
रजोगुणमयः सूक्ष्मो रुक्षः शीतो लघुश्चलः ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
रुग्णः, त्रि, ( रुज् + क्तः । ओदितश्चेति नः । )
रोगादिना कुटिलीकृतः । तत्पर्य्यायः । भुग्नः २ ।
इत्यमरः ॥ ( यथा, रामायणे । २ । १०२ । ८ ।
“त्वया विहीनस्तव शोकरुग्ण-
स्त्वां संस्मरन्नेव गतः पिता ते ॥” )
रोगी । इति राजनिर्घण्टः ॥
रुच, ङ रु प्रीतिप्रकाशयोः । इति कविकल्पद्रुमः ॥
( भ्वा०-आत्म०-अक०-सेट् । ) प्रीतिरिह अनुरागविशेषः । तत्र यस्यानुरागस्तस्य सम्प्रदानत्वम् । ङ, रोचते अन्नं बुभुक्षवे । रु, अरुचत् ।
इति दुर्गादासः ॥
रुचकं, क्ली, ( रोचतेऽनेनेति । रुच् + “बहुलमन्यत्रापि ।” उणा० २ । ३७ । इति वुन् ।) सर्जिकाक्षारम् । अङ्गाभरणम् । माल्यम् । सौवर्चलम् । ( यथा,—
“सौवर्चलं स्याद्रुचकमक्षपाकञ्च तन्मतम् ॥”
तथास्य गुणाः ।
“रुचकं रोचनम्भेदि दीपनम्पाचनम्परम् ।
सुस्नेहं वातनुन्नातिपित्तलं विशदं लघु ।
उद्गारशुद्धिदं सूक्ष्मं विबन्धानाहशूलजित् ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमभागे ॥ )
माङ्गल्यद्रव्यम् । ( यथा, भागवते । ३ । २३ । ३१ ।
“हारेण च महार्हेण रुचकेन च भूषितम् ॥”
“रुचकेन मङ्गलद्रव्येण ।” इति श्रीधरः ॥) उत्कटः ।
इति मेदिनी । के, १४६ ॥ स्वाद्वरसः । इति शब्दरत्नावली ॥ रोचना । विडङ्गम् । इति हेमचन्द्रः ॥ लवणम् । इति हारावली ॥ (दन्तिणदिक् । यथा, बृहत्संहितायाम् । ५३ । ३५ ।
“प्राक्पश्चिमावलिन्दावन्तगतौ तदवधिस्थितौ शेषौ ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥”
“रुचकं मातुलुङ्गकम् ।” इत्युज्ज्वलदत्तः ।
२ । ३७ ॥ )
रुचकः, पुं, ( रोचते इति । रुच् + वुन् । ) बीजपूरः । निष्कः । दन्तः । कपोतः । इति मेदिनी ॥
( यथा, बृहत्संहितायाम् । ६८ । २ ।
“जीवेन भवति हंसः
सौरेण शशः कुजेन रुचकश्च ॥”
पर्व्वतविशेषः । यथा, विष्णुपुराणे । २ । २ । २६ ।
“त्रिकूटः शिशिरश्चैव पतङ्गो रुचकस्तथा ॥”
स्तम्भः । यथा, बृहत्संहितायाम् । ५३ ।
२८ ।

रैवतकं, क्ली, (रैवतकमेव । स्वार्थे अण् ।) पारेवतवृक्षः । इति राजनिर्घण्टः ॥ (पारेवतशब्देऽस्य गुणादिकं ज्ञेयम् ॥)

रैवतकः, पुं, (रैवत एव । स्वार्थे कन् ।) रैवतपर्व्वतः । तत्पर्य्यायः । उज्जयन्तः २ । इति हेमचन्द्रः ॥ (यथा, महाभारते ।१।२२०।१।
"ततः कतिपयाहस्य तस्मिन् रैवतके गिरौ ।
वृष्ण्यन्धकानामभवदुत्सवो नृपसत्तम ! ॥")
तस्य नामकारणं रैवतीशब्दे द्रष्टव्यम् ॥

रैवतिकः, त्रि, (रेवती+"रेवत्यादिभ्यष्ठक् ।" ४ । १ । १४६ । इति ठक् ।) रेवत्या अपत्यम् । इति मुग्धबोधव्याकरणम् ॥

रोकं, क्ली, (रोचतेऽनेनेति । रुच्+घञ् । न्यङ्क्वादित्वात् कुत्वम् ।) छिद्रम् । इत्यमरः ।१।८।२॥ नौका । चलम् । इति मेदिनी ॥ के, ३२ ॥

रोकः, पुं, (रुच्+घञ् ।) क्रयभेदः । दीप्तिः । इति मेदिनी । के, ३१ ॥ (यथा, ऋग्वेदे । ३ । ६ । ७ ।
"दिवश्चिदाते रुचयन्त रोकाः ।"
"ते रोकास्त्वदीया दीप्तयः ।" इति तद्भाष्ये सायणः ॥")

रोगः, पुं, (रुज्यतेऽनेनेति । रोजनमिति वा । रुज+घञ् । यद्वा, रुजतीति । रुज्+"पदरुजविशस्पृशो घञ् ।" ३।३।१६ । इति कर्त्तरि घञ् ।) कुष्ठौषधम् । इति मेदिनी । गे, २३ ॥ देहभङ्गकारकः । तत्पर्य्यायः । रुक् २ रुजा ३ उपतापः ४ व्याधिः ५ गदः ६ आमयः ७ । इत्यमरः । २ । ६ । ५१ ॥ अपाटवः ८ आमः ९ आतङ्कः १० भयः ११ उपघातः १२ भङ्गः १३ अर्त्तिः १४ तमोविकारः १५ ग्लानिः १६ क्षयः १७ अनार्ज्जवः १८ मृत्युभृत्यः १९ । इति राजनिर्घण्टः ॥ अमः २० । इति जटाधरः ॥ मान्द्यम् २१ आकल्पम् २२ । इति हेमचन्द्रः ॥ * ॥ अस्य निदानादिर्यथा,—

धन्वन्तरिरुवाच ।

"सर्व्वरोगनिदानञ्च वक्ष्ये सुश्रुत तत्त्वतः ।
आत्रेयाद्यैर्मुनिवरैर्यथापूर्व्वमुदीरितम् ॥
रोगः पाप्मा ज्वरो व्याधिर्विकारो दुष्टमामयः ।
यक्ष्मातङ्कगदाबाधाः शब्दाः पर्य्यायवाचिनः ॥
निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा ।
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥
निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वात् व्याधीनां तद्यथायथम् ।
तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ।
हेतुव्याधिविपर्य्यस्तं विपर्य्यस्तार्थकारिणाम् ।
औषधान्नविहाराणां उपयोगं सुखावहम् ।
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ।
यथा दुष्टेन दोषेण यथा चानुविसर्पता ॥
निर्वृत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः ।
संख्याविकल्पप्राधान्यबलकालविशेषतः ॥
स भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ।
दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ॥
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।
हेत्वादिकात्स्न्र्यावयवैर्बलाबलविशेषणम् ॥
नक्तं दिनर्त्तुभुक्तांशैर्व्याधिकालो यथा मलम् ।
इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ।
सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः ॥
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ।
अहितस्त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥
तिक्तोषणकषायाल्परूक्षाप्रमितभोजनैः ।
धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥
क्रियाभियोगभीशोकचिन्ताव्यायाममैथुनैः ।
ग्रीष्माहोरात्रभुक्तान्ते प्रकुप्यति समीरणः ॥
पित्तं कट्वम्लतीक्ष्णोष्णकटुक्रोधविदाहिभिः ।
शरन्मध्याह्नरात्र्यर्द्धविदाहसमयेषु च ॥
स्वाद्वम्ललवणस्निग्धगुर्व्वभिष्यन्दिशीतलैः ।
आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।
पूर्व्वाह्णे पूर्व्वरात्रे च श्लेष्मा वक्ष्यामि सङ्करान् ॥
मिश्रीभावात् समस्तानां सन्निपातस्तथा पुनः ।
सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्त्ततः ।
ऋतोर्दुष्टात् पुरोवातात् विषघ्नावेशविप्लवात् ॥
दुष्टामान्नैरतिस्निग्धग्रहैर्जन्मर्क्षपीडनात् ।
मिथ्यायोगाच्च विविधात् पापानाञ्च निषेवणात् ॥
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ।
प्रतिरोगमिति क्रुद्धा रोगविध्यनुगामिनः ।
रसायनी प्रपद्याशु दोषा देहे विकुर्व्वते ॥"

इति गारुडे सर्व्वरोगनिदानं १५१ अध्यायः ॥ रोगविशेषाणां औषधानि गारुडे १८९।१९०। १९१ । १९२ । १९३ । १९४ । १९५ । १९६ । १९७ । १९८ । १९९ अध्यायेषु द्रष्टव्यानि ॥ सर्व्वरोगहरवैष्णवकवचञ्च तत्रैव २०० अध्याये द्रष्टव्यम् ॥ * ॥ अपि च ।

"जनकः सर्व्वरोगाणां दुर्न्निवारो दारुणो ज्वरः ।
शिवभक्तश्च योगी च स एव विकृताकृतिः ॥
भीमस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकयमोपमः ॥
मन्दाग्निस्तस्य जनको मन्दाग्नेर्जनकास्त्रयः ।
पित्तश्लेष्मसमीराश्च प्राणिनां दुःखदायकाः ॥
वायुजः पित्तजश्चैव श्लेष्मजश्च तथैव च ।
ज्वरभेदाश्च त्रिविधाश्चतुर्थश्च त्रिदोषजः ॥
पाण्डुः कामलः कुष्ठः शोथः प्लीहा च शूलकः ।
ज्वरातिसारग्रहणीकासव्रणहलीमकाः ॥
मूत्रकृच्छ्रश्च गुल्मश्च रक्तदोषविकारजः ।
आदिशो मेहनः कुब्जो गोदश्च गलगण्डकः ॥
भ्रमरी सन्निपातश्च विषूची दारुणो सति ।
एषां भेदप्रभेदेन चतुःषष्टिश्च स्मृताः ॥
मृत्युकन्यासुताश्चैते जरा तस्याश्च कन्यका ।
जरा च भ्रातृभिः सार्द्धं शश्वद्भ्रमति भूतलम् ॥
एते चोपायवेत्तारं न गच्छन्ति च संयुतम् ।
पलायन्ते च तं दृष्ट्वा वैनतेयमिवोरगाः ॥ * ॥
चक्षुर्जलञ्च व्यायामः पादाधस्तैलसेवनम् ।
कर्णतैलं मूर्द्धि तैलं जराव्याधिविनाशकम् ॥
वसन्ते भ्रमणं वह्निसेवास्वल्पं करोति यः ।
बालाञ्च सेवते काले जरा तं नोपगच्छति ॥
स्नातशीतोदकस्नायी सेवते चन्दनद्रवम् ।
नोपयाति जरा तञ्च निदाघेऽनिलसेविनम् ॥
प्रावृडुष्णोदकस्नायी घनतोयं न सेवते ।
समये च समाहारी जरा तं नोपगच्छति ॥
शरद्रौद्रं न गृह्णाति भ्रमणं तत्र वर्जयेत् ।
स्नातस्नायी समाहारी जरा तं नोपतिष्ठति ॥
स्नातस्नायी च हेमन्ते काले वह्निं निषेवते ।
भुङ्क्ते नवान्नमुष्णञ्च जरा तं नोपगच्छति ॥
शिशिरेऽशुकवह्निञ्च नवोष्णान्नञ्च सेवते ।
य एवोष्णोदकस्नायी जरा तं नोपगच्छति ॥
सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम् ।
घृतञ्च सेवते यो हि जरा तं नोपगच्छति ॥
भुङ्क्ते सदन्नं क्षुत्काले तृष्णायां पीयते जलम् ।
नित्यं भुङ्क्ते च ताम्बूलं जरा तं नोपगच्छति ॥
दधि हैयङ्गवीनञ्च नवनीतं तथा गुडम् ।
नित्यं भुङ्क्ते संयमी यो जरा तं नैव गच्छति ॥
शुष्कमांसं स्त्रियो वृद्धा बालार्कं तरुणं दधि ।
संसेवन्तं जरा याति प्रहृष्टा भ्रातृभिः सह ॥
रात्रौ ये दधि सेवन्ते पुंश्चलीञ्च रजस्वलाम् ।
तानुपैति जरा हृष्टा भ्रातृभिः सह सुन्दरि ! ॥
रजस्वला च कुलटा चावीरा जारदूतिका ।
शूद्रयाजकपत्नी या ऋतुहीना च या सति ! ॥
यो हि तासामन्नभोजी ब्रह्महत्यां लभेत्तु सः ।
तेन पापेन सार्द्धं सा जरा तमुपगच्छति ॥
पापानां व्याधिभिः सार्द्धं मित्रता सन्ततं ध्रुवम् ।
पापं व्याधिजराबीजं विघ्नबीजञ्च निश्चितम् ॥
पापेन जायते व्याधिः पापेन जायते जरा ।
पापेन जायते दैन्यं दुःखं शोकं भयं कलिः ॥
तस्मात् पापं महावैरं दोषबीजममङ्गलम् ।
भारते सन्ततं सन्तो नाचरन्ति भयातुराः ॥
स्वधर्म्माचारयुक्तञ्च दीक्षितं हरिसेवकम् ।
गुरुदेवातिथीनाञ्च भक्तं सक्तं तपःसु च ॥
व्रतोपवासयुक्तञ्च सदा तीर्थनिषेविणम् ।
पापा स्रवन्ति तं दृष्ट्वा वैनतेयमिवोरगाः ॥
एतान् जरा न स्पर्शेत व्याधिसङ्घश्च दुर्जयः ।
सर्व्वं ग्रीष्मसमये काले सर्व्वं ग्रहीष्यति ॥ * ॥
ज्वरश्च सर्व्वरोगाणां जनकः कथितः सति ! ।
पित्तश्लेष्मसमीराश्च ज्वरस्य जनकास्त्रयः ॥
एते यथा सञ्चरन्ति क्षयं यान्ति च देहिषु ।
तमेव विविधोपायं साध्वि मत्तो निशामय ॥
क्षुधि जाज्वल्यमानायामाहाराभाव एव च ।
प्राणिनां जायते पित्तं वह्निं च मणिपूरके ॥
तावद्विलक्षणं क्षुधा जलपानञ्च तत्क्षणम् ।

तदेव तु भवेत् पित्तं सद्यःप्राणहरं परम् ॥
तप्तोदकञ्च शरदि भानुतप्तं विशेषतः ।
देवग्रस्तश्च यो भुङ्क्ते पित्तं तस्य प्रजायते ॥
सशर्करञ्च धन्याकं पिष्टं शीतोदकान्वितम् ।
चवकं सर्व्वगव्यञ्च दधितक्रविवर्ज्जितम् ॥
विल्वतालफलं पक्वं सर्व्वमन्वारमेव च ॥
आर्द्रकं मुद्गयूषञ्च तिलपिष्टं सशर्करम् ॥”
अन्वारस्थाने ऐक्षवमिति च पाठः ।
“पित्तक्षयकरं सद्यो बलपुष्टिप्रदं परम् ।
पित्तनाशञ्च तद्बीजसुक्तमन्यं निबोध मे ॥
भोजनानन्तरं स्नानं जलपानं विना तृषा ।
तिलतैलं स्निग्धतैलं स्निग्धमामलकीद्रवम् ॥
पर्य्युषितान्नं तक्रञ्च पक्वरम्भाफलं दधि ।
छायाम्बुशर्करातोयं सुस्निग्धव्यजनसेवनम् ॥
नारिकेलोदकं स्नानं पर्य्युषितं जलम् ।
तक्रसुक्तपक्वफलं सुपक्वकर्कटीफलम् ॥
प्रातःस्नानञ्च वर्षासु मूलकं श्लेष्मकारणम् ।
अक्षारर्द्धं च तल्वन्न मद्यद्यौविनाशनम् ॥
नक्तिखिरं भ्रष्टिभक्तं पक्वतैलं विशोषकम् ।
भ्रमणं शुष्कभक्षञ्च शुष्कपक्वहरीतकी ॥
पिण्डारकमपक्वञ्च रम्भाफलमपक्वकम् ।
वेशवारसिन्धुवारमनाहारमपानकम् ॥
सद्यःतं रोचनाचूर्णं सद्यतं शुष्कशर्करम् ।
मरीचं पिप्पलीशुष्कमार्द्रकं जीरकं मधु ॥
द्रव्याण्येतानि गन्धर्व्वि सद्यः श्लेष्महराणि च ।
बलपुष्टिकराण्येव वायुबीजं निशामय ॥
भोजनानन्तरं सद्यो गमनं धावनं तथा ।
छेदनं वह्नितापञ्च शश्वद्भ्रमणमैथुनम् ॥
वृद्धस्त्रीगमनञ्चैव मनःसन्ताप एव च ।
अतिरूक्षमनाहारं युद्धं कलहमेव च ॥
कटुवाक्यं भयं शोकः केवलं वायुकारणम् ।
आशास्थापकं तत्त्वन्न निशामय तदौषधम् ॥
पक्वरम्भाफलञ्चैव सबीजं सर्करोदकम् ।
नारिकेलोदकञ्चैव सद्यस्तक्रं सुमिष्टकम् ॥
माहिषं दधि मिष्टञ्च केवलं वा सशर्करम् ।
सद्यःपर्य्युषितान्नञ्च सौवीरं शीतलोदकम् ॥
पक्वतैलविशेषञ्च तिलतैलञ्च केवलम् ।
नारिकेलतालशस्यं रसुक्तमामलकीद्रवम् ॥
शीतलोष्णोदकस्नानं सुस्निग्धचन्दनद्रवम् ।
स्निग्धपद्मपत्रतल्पं सुस्निग्धव्यजनानिलः ॥
एतत्ते कथितं वत्से ! सद्यो वातप्रणाशनम् ।*।
वायवस्त्रिविधाः पुंसां क्लेशसन्तापकारणाः ॥
व्याधिसंघञ्च कथितस्तन्नाणि विविधानि च ।
तानि व्याधिप्रणाशाय कृतानि सद्भिरेव च ॥
तन्नाण्येतानि सर्व्वाणि व्याधिक्षयकराणि च ।
रसायनादयो येषु योपायश्च सुदुर्ल्लभः ॥
न शक्तः कश्चित् व्याधि याथार्थ्यं वक्तुरेव च ।
तेषाञ्च सर्व्वतन्त्राणां ज्ञातार्थानां विचक्षणे ! ॥”

इति ब्रह्मवैवर्त्ते ब्रह्मखण्डे १६ अध्यायः ॥

अथ व्याधिलक्षणम् । तत्र वाग्भटः ।
“रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते ॥
ते च स्वाभाविकाः केचित् केचिदागन्तवः
स्मृताः ।
मानसाः केचिदाख्याताः कथिताः केऽपि
कायिकाः ॥”
तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः ।
क्षुत्पिपासानिद्राजागराक्लृप्रभृतयः ॥ अथवा
स्वस्य भावादुत्पत्तेर्जाताः स्वाभाविकाः सहजा
इति यावत् । ते च जन्मान्धादयः । आग-
न्तवोऽभिघातादिजनिताः । अथवा जन्मोत्तर-
भाविनः । मानसाः कामक्रोधलोभमोहभया-
भिमानदैन्यपैशुन्यविषादेर्षासूयामात्सर्य्यप्रभृ-
तयः । अथवा उन्मादापस्मारमूर्च्छाभ्रमतमः-
सन्न्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः ॥
“कर्म्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे ।
कर्म्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः ॥”
तत्र कर्म्मजा व्याधयः । यत् प्राक्तनं दुष्कर्म्म-
प्रबलं व्याधिरूपं केवलं भोगनाश्यं प्रायश्चित्त-
नाश्यं वा ततो जाताः न तु दुष्टवातादिदोषैश्च
जनिताः । तथा ।
“यथाशास्त्रन्तु निर्णीता यथाव्याधि चिकित्-
सिताः ।
न शमं यान्ति ये रोगास्ते ज्ञेयाः कर्म्मजा बुधैः ॥”
दोषजाः मिथ्याहारविहारप्रकुपितवातपित्त-
कफजाः ॥ * ॥ ननु मिथ्याहारविहारिणामपि
प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव ततो दोषजे-
ष्वपि प्राक्तनकर्म्मैव कारणं तत् कथं दोषजा
इति । उच्यते । दोषजेष्वपि वस्तुत आदिकारणं
दुष्कर्म्म वर्त्तत एव किन्तु तत्र मिथ्याहार-
विहारभूषिता दोषा हेतवो दृश्यन्त इति दोषजा
इत्युच्यन्त इति समाधिः ॥ * ॥ कर्म्मदोषोद्भवाः ।
“स्वल्पदोषो गरीयांसस्ते ज्ञेयाः कर्म्मदोषजाः ।”
अत्र कारणं दुष्कर्म्मप्रबलं यतो दोषाल्पत्वेऽपि
व्याधिर्गरीयस्त्वं तत्कर्म्मक्षयादेव क्षीणं भवति ।
दोषास्तु स्वल्पा अपि निदानत्वेनोक्ता दृश्यन्त
एवेति । दोषाणां कारणन्तु मन्यत इति कर्म्म-
दोषोद्भवाः ।
“कर्म्मक्षयात् कर्म्मजाता दोषजाः स्वस्वभेषजैः ।
कर्म्मदोषोद्भवा यान्ति कर्म्मदोषक्षयात् क्षयम् ॥”
दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणं
दुष्कर्म्म तद्वैद्यजार्यद्रव्यव्ययादिजनितदुःखभोगेन
कटुतिक्तकषायाद्युग्रभक्षणादिजनितदुःखभो-
गेन च क्षयं याति । शेषाद्दृष्टहेतवो दोषास्ते
स्वस्वभेषजैः क्षयं यान्तीत्यर्थः ।
“साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः
स्मृताः ।
सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते ॥”
याप्यलक्षणमाह ।
“यापनीयन्तु तं विद्यात् क्रिया धारयते हि तम् ।
क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥
प्राप्ता क्रिया धारयति सुखिनं प्राप्यमातुरम् ।
प्रपतिष्यदिवागारं स्तम्भो यत्नेन योजितः ॥
साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा ।
घ्नन्ति प्राणानसाध्यास्तु नराणामक्रियावताम् ॥”
अक्रियावतां चिकित्सारहितानाम् ॥ * ॥
अथोपद्रवलक्षणम् ।
“रोगारम्भकदोषस्य प्रकोपादुपजायते ।
योऽन्यो विकारः स बुधैरुपद्रव इहोदितः ॥”
अथारिष्टस्य लक्षणमाह ।
“रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते ।
तल्लक्षणमरिष्टं स्याद्रिष्टञ्चापि तदुच्यते ॥”
अथ रोगस्य चिकित्सालक्षणमाह ।
“या क्रिया व्याधिहरणी सा चिकित्सा निग-
द्यते ।
दोषधातुमलानां या साम्यकृत् सैव रोगहृत् ॥”
क्रियात्र कर्म्म । व्याधिर्ह्रियतेऽनयेति व्याधि-
हरणी । करणाधिकरणयोश्चेति सूत्रेण करणार्थे
ल्युट् । तथा च ।
“याभिः क्रियाभिर्जायन्ते शरीरे धातवः समाः ।
सा चिकित्सा विकाराणां कर्म्म तद्भिषजां
मतम् ॥
या ह्युदीर्णं शमयति नान्यं व्याधिं करोति च ।
सा क्रिया न तु या व्याधिं हरत्यन्यमुदीरयेत् ॥”
क्रियात्र चिकित्सा । तथा चामरसिंहः ।
“आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् ।
उपायः कर्म्म चेष्टा च चिकित्सा च नव क्रियाः ॥”
इति ॥ * ॥
अथ चिकित्साविध्युपदेशः ।
“आतमाचचिकित्स्यः स्यान्नोपेक्ष्योऽल्पतया गदः ।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥
रोगमादौ परीक्षेत ततोऽनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चात् ज्ञानपूर्व्वं समाचरेत् ॥”
अयमर्थः । भिषक् आदौ रोगं परीक्षेत विचा-
रयेत् । ततोऽनन्तरं औषधं विचारयेत् । ततः
पश्चात् रोगौषधविचारानन्तरं ज्ञानपूर्व्वं साव-
धानो न तु अवज्ञया कर्म्म चिकित्सामौषध-
दानादिरूपं समाचरेदित्यर्थः ॥ * ॥ रोगाज्ञाने
चिकित्साकरणे दोषमाह ।
“यस्तु रोगमविज्ञाय कर्म्माण्यारभते भिषक् ।
अप्यौषधविधानज्ञस्तस्य सिद्धिर्यदृच्छया ॥”
यदृच्छा स्वेरितया सिद्धिर्भवति वापि भवती-
त्यर्थः । अन्यच्च ।
“औषधं केवलं कर्त्तुं यो जानाति न चामयम् ।
वैद्यकर्म्म स चेत् कुर्य्याद्वधमर्हति राजतः ॥” * ॥
रोगज्ञाने भेषजाज्ञाने दोषमाह ।
“यस्तु केवलरोगज्ञो भेषजेष्वविचक्षणः ।
तं वैद्यं प्राप्य रोगी स्याद्यथा नौर्नाविकं
विना ॥”
नाविकं कर्णधारं विना यथा नौः वकुण्ठे पतति
तथा रोगीत्यर्थः । अन्यच्च ।
“यस्तु केवलशास्त्रज्ञः क्रियास्वकुशलो भिषक् ।
स मुह्यत्यातुरं प्राप्य भीरुः प्राप्येव चाहवम् ॥”
रोगौषधयोर्ज्ञाने गुणमाह ।
“यस्तु रोगविशेषज्ञः सर्व्वभैषज्यकोविदः ।
देशकालविभागज्ञस्तस्य सिद्धिर्न संशयः ॥

आदावन्ते यथा ग्रामे प्रवदेत चिकित्सकः ।
भेषजानां विनाशेऽथ ततः कुर्य्याच्चिकित्सितम् ॥"
चिकित्सितमित्यत्र भावे क्तः । इति भावप्रकाशे पूर्व्वखण्डः ॥ * ॥ अथ येन रोगाणां ज्ञानं स्यात्तदाह ।
"हेतुस्तदनु संप्राप्तिः पूर्व्वरूपञ्च लक्षणम् ।
तथैवोपशयः पञ्च रोगविज्ञानहेतवः ॥"
तत्र हेतोर्लक्षणमाह ।
"यत्तु न व्याधिना येन तस्य तद्धेतुरुच्यते ।
शास्त्रे संव्यवहाराय तत्पर्य्यायान् प्रचक्ष्महे ॥
निदानं कारणं हेतुर्निमित्तञ्च निबन्धनम् ।
मूलमायतनं तत्तु प्रत्ययोऽपि निगद्यते ॥"
तत्र हेतुर्व्याधीनां ज्ञानाय हेतुर्यथा । वर्षाकालश्रमहिमानशनानिमैथुनशोकचिन्ताभयादयो वातप्रकोपहेतवो वातजान् व्याधीन् बोधयन्ति । शरत्कालकट्वम्लतीक्ष्णक्रोधस्वेदक्षुधाभिघातादयः पित्तप्रकोपहेतवः पित्तजान् व्याधीन् बोधयन्ति । वसन्तमधुरस्निग्धशीतादयः कफप्रकोपहेतवः कफजान् व्याधीन् बोधयन्ति ॥ * ॥
अथ संप्राप्तेर्लक्षणमाह ।
"यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
उत्पत्तिरामयस्यासौ संप्राप्तिर्जातिरागतिः ॥"
यथा दुष्टेन दोषेण यथा कारणभेदेन दुष्टेन दोषेण । यथा चानुविसर्पता अनेकधा दोषाणां विसर्पणमूर्द्धाधस्तिर्य्यगादिगतिभेदेन । तथा च विसर्पता आमयस्य या उत्पत्तिः असौ संप्राप्तिः । शास्त्रे व्यवहाराय संप्राप्तेः पर्य्यायावाह जातिरागतिरिति । संप्राप्तेरौपाधिकभेदानाह ।
"संख्याविकल्पप्राधान्यबलकालविशेषतः ।
सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥"
संख्यादिरूपा ये विशेषास्तेभ्यः सा संप्राप्तिर्भिद्यते भेदवती क्रियते इत्यर्थः । तत्र संख्यां विवृणोति । यथा ज्वरोऽष्टधा अतीसारः षड्विध इत्यादि । विकल्पं विवृणोति । दोषाणां समवेतानां विकल्पोंऽशांशकल्पना । समवेतानां समुदितानां दोषाणां अंशांशकल्पना हीनमध्याधिकभेदैर्भागकल्पना विकल्पः ॥ * ॥ प्राधान्यं विवृणोति ।
"स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ।
व्याधेः स्वातन्त्र्येण प्राधान्यं पारतन्त्र्येणाप्राधान्यञ्च वदेदित्यर्थः । यथा स्वतन्त्रस्य ज्वरस्य प्राधान्यं ज्वराधीनानां श्वासादीनामप्राधान्यम् ॥ * ॥ बलं विवृणोति ।
"हेत्वादिकात्स्न्यावयवैर्बलाबलविशेषणम् ।"
अत्रापि व्याधेरित्यनुवर्त्तते । हेत्वादेः हेतुपूर्व्वरूपाणां कार्त्स्न्येन साकल्येन । अवयवैः एकदेशेन । व्याधेर्बलाबलयोर्विशेषकं विशेषबोधः ॥ * ॥ कालं विवृणोति ।
"नक्तं दिनर्त्तुभुक्तांशैर्व्याधिकालो यथामलम् ।"
नक्तमव्ययं रात्रिवाचकम् । एतेनैतदुक्तं यस्मिन्नक्तादेरंशे यस्य दोषस्य प्रकोप उक्तोऽस्ति सोऽंशस्तद्दोषजस्य व्याधेः काल इत्यर्थः । नक्तादेरंशेषु वातादिप्रकोप उक्तो वाग्भटेन ।
"ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्द्ध्वसंश्रयाः ।
वयोऽहोरात्रिभुक्तानामन्तमध्यादिगाः क्रमात् ॥"
इति ॥
ते वातपित्तकफाः । ऋतुषु वातादिकोपो यथा,
"वर्षासु शिशिरे वायुः पित्तं शरदि उष्मके ।
वसन्ते तु कफः कुप्येदेषा प्रकृतिरार्त्तवी ॥" * ॥
संप्राप्तिर्व्याधीनां ज्ञानाय हेतुर्यथा । मिथ्याहारविहारकुपितवातादयामाशयगमनरसदूषणकोष्ठाग्निर्बहिर्निरसनरूपं ज्वरोत्पत्तिप्रकारं बोधयति तथा व्याधीनां संख्यादोषांशांशकल्पनाप्राधान्यबलकालांश्च बोधयति । तेषु ज्ञानेषु चिकित्साविशेषः स्यात् ॥ * ॥ अथ पूर्व्वरूपस्य लक्षणमाह ।
"पूर्व्वरूपन्तु तद्येन विद्याज्जातिनमामयम् ।
सामान्यञ्च विशिष्टञ्च द्विविधं तदुदाहृतम् ॥
सामान्यं तत्र दोषाणां विशेषैरनधिष्ठितम् ।
विशिष्टमीषद्व्यक्तं स्यात् विशेषेण समन्वितम् ॥"
दोषाणां विशेषाः जृम्भातिशयनेत्रदाहाग्निमान्द्यादयः । तत्र पूर्व्वरूपं व्याधीनां ज्ञानाय हेतुर्यथा । श्रमादयो भाविनं ज्वरं बोधयन्ति । अथ च त एव श्रमादयोऽतिशयितजृम्भायुक्ता भाविनं वातज्वरं नेत्रदाहयुक्ता भाविनं पित्तज्वरं वह्निमान्द्ययुक्ता भाविनं श्लेष्मज्वरं बोधयन्ति ॥ * ॥ अथ लक्षणस्य लक्षणमाह ।
"पूर्व्वरूपं विशिष्टं यदात्तं तल्लक्षणं स्मृतम् ।
संस्थानं लिङ्गचिह्ने च व्यञ्जनं रूपमाकृतिः ॥"
विशिष्टं पूर्व्वरूपं ईषद्व्यक्तं रूपं तदेव सम्यग्व्यक्तं लक्षणं स्मृतम् । तत्र शास्त्रे व्यवहाराय पर्य्यायानाह संस्थानमित्यादि । लक्षणं व्याधीनां ज्ञानाय हेतुर्यथा । स्वेदावरोधः सन्तापः सर्व्वाङ्गग्रहणञ्च युगपदेतल्लक्षणं ज्वरं बोधयति ॥ * ॥ अथोपशयस्य लक्षणमाह ।
"औषधान्नविहाराणामुपयोगं सुखावहम् ।
कृत्वोपशयं विद्यात् स हि सात्म्यमिति स्मृतः ॥"
तत्र वातस्योपशयमाह ।
"मधुरलवणसाम्लस्निग्धमुष्णान्ननिद्रा-
गुरुतरचिकुरवह्निस्वेदसंमर्द्दनानि ।
दहनजलदशोषाभ्यङ्गसन्तर्पणानि
प्रकुपितपवमानं शान्तमेतानि कुर्य्युः ॥"
अथ पित्तस्योपशयमाह ।
"तिक्तस्वादुकषायशीतपवनच्छायानिशावीजनज्योत्स्नाभूगृहयन्त्रवारिजलदश्रीखण्डसंस्पर्शनम् ।
सर्पिः क्षीरविरेकसेकरुधिरस्रावप्रदेहादिकं पानाहारविहारमेवजमिदं पित्तं प्रशान्तिं नयेत् ॥"
अथ कफस्योपशयमाह ।
"रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवनं धूमात्युष्णशिरोविरेकवमनं स्वेदोपवासादिकम् ।
युद्धयातामनियुद्धजागरजलक्रीडाङ्गनासेवनं
पानाहारविहारभेषजमिदं श्लेष्मान्तमूर्य्यं हरेत् ॥"
जलक्रीडा कथं कफं हरति तदाह । जलक्रीडाजनितशैत्याबद्धदेहोष्मा पङ्क्तिप्रपाकाग्निरिवोग्रो भूत्वा कफं शोषयति इति समाधिः ॥ * ॥ उपशयो व्याधिज्ञानाय हेतुर्यदुक्तं चरकेण । गूढलिङ्गं व्याधिमुपशयानुपशयाभ्यां परीक्षेतेति । तथा च सुश्रुते ।
"अभ्यङ्गस्वेदनाभ्यैर्विकारो वातिको न यः ।
शान्तिस्तत्र तु विज्ञेयं रक्तमार्गाश्रितं पूजितम् ॥
सर्व्वेषामेव रोगाणां निदानं कुपिता मलाः ।
तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥"
सर्व्वेषां रोगाणां निदानं समीहितं कारणम् । कुपिताः स्वहेतुदुष्टाः । मलाः वातपित्तकफाः एवेत्यन्वयः । तथा च वाग्भटः । दोषा एव हि सर्व्वेषां रोगाणामेककारणमिति । नन्वागन्तुकव्याधिषु व्यभिचारः स्यात् । तत्र तत्रापश्यन्तरान्तरं दोषप्रकोपस्यावश्यं भावित्वात् । उत्पन्नरुग्णेषु गुणयोगस्यैव । इति भावप्रकाशः ॥ * ॥
पापजरोगा यथा । शातातपीयकर्म्मविपाके ।
"कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतिसारभगन्दरौ ॥
दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥
जलोदरयकृत्प्लीहशूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्द्दिभ्रममोहगलग्रहाः ।
रक्तार्ब्बुदविसर्पाद्या उपपापोद्भवा गदाः ॥
दण्डापतानकश्चित्रवपुःकम्पविचर्च्चिकाः ।
वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥
तथा ।
"अर्शआद्या नृणां रोगा अतिपापाद्भवन्ति हि ।
अन्ये च बहुधा रोगा जायन्ते रोगसङ्कराः ।
उच्यन्ते हि निदानानि प्रायश्चित्तानि च
क्रमात् ॥"
सर्व्वरोगनाशकदानं यथा । हेमाद्रिधृतदानखण्डे भगवद्वाक्यम् ।
"सुवर्णदानं सर्व्वेषां रोगाणां नाशकारणम् ।
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं कमलोद्भव ॥"
इति मलमासतत्त्वम् ॥ * ॥
अथारोग्यस्नानदिनम् । तत्र तिथयो रिक्ताः प्रशस्ताः । दशमीप्रतिपद्द्वितीयात्रयोदशीपञ्चमीभिन्ना मध्यमाः । तत्र नक्षत्राणि । स्वातीमघाधनिष्ठाशतभिषाज्येष्ठाश्लेषापुष्यपूर्व्वाषाढापूर्व्वफल्गुनीपूर्व्वभाद्रपदमघाभरणीकृत्तिकाशिरांसि । तत्र वाराः क्रूराः । तत्र योगो व्यतीपातः । अशुभलग्नः । लग्नापेक्षया केन्द्रेषु पापग्रहः । इति ज्योतिस्तत्त्वम् ॥ अपि च ।
"चन्द्रार्कशुद्धौ व्यतीपाते भौमार्कशनिवासरे ।
व्याधिमुक्तो व्याधिमुक्तः शस्तः स्नानं समाचरेत् ॥
पूर्व्वात्रयमघाश्लेषा भरणी कृत्तिका तथा ।
आर्द्रायाञ्च तिथौ रिक्ते चारोग्यस्नानमाचरेत् ॥"
इति ज्योतिःसारसंग्रहः ॥

**रोगघ्नं**, क्ली, ( रोगं हन्तीति। हन+टक्।) औषधम्। इति वैद्यकम्॥ रोगनाशके, त्रि॥ (स्त्रियां ङीप्। यथा, सुश्रुते। १। ४४।
"त्रिफला सर्व्वरोगघ्नी त्रिभागघृतमूर्च्छिता।")

**रोगभूः**, स्त्री, ( रोगाणां भूः स्थानं व्याधिमन्दिरत्वात्। ) शरीरम्। इति शब्दचन्द्रिका॥

**रोगराजः**, पुं, ( रोगाणां राजा। टच्।) राजयक्ष्मा। इति राजनिर्घण्टः॥ (यथा,—
"इति व्याधिसमूहस्य रोगराजस्य हेतुजम्।
रूपमेकादशविधं हेतुश्चोक्तश्चतुर्विधः॥"
इति चरके चिकित्सास्थाने ८ अध्यायः॥)

**रोगलक्षणं**, क्ली, (रोगाणां लक्षणम्।) निदानम्। इति राजनिर्घण्टः॥

**रोगशान्तकः**, पुं, ( रोगान् शान्तयतीति। शान्ति+ण्वुल्।) वैद्यः। इति शब्दचन्द्रिका॥

**रोगशिला**, स्त्री, ( रोगाय रोगनिवृत्तये शिला।) मनःशिला। इति राजनिर्घण्टः॥ ( विवरणमस्या मनःशिलाशब्दे विज्ञेयम्॥ )

**रोगशिल्पी**, [ न् ] पुं, ( रोगे शिल्पीव।) वृक्षविशेषः। इति जटाधरः॥ शराबु इति भाषा॥

**रोगश्रेष्ठः**, पुं, ( रोगेषु श्रेष्ठः।) ज्वरः। इति राजनिर्घण्टः॥

**रोगहं**, क्ली, ( रोगान् हन्तीति। हन्+डः।) औषधम्। इति शब्दचन्द्रिका॥

**रोगहरद्रव्यं**, क्ली, ( रोगहरं रोगनाशकं द्रव्यम्।) रोगनाशकवस्तु। यथा,—

धन्वन्तरिरुवाच।

"द्रव्याणि मधुरादीनि वक्ष्ये रोगहराण्यहम्।
शालिषष्टिकगोधूमक्षीरञ्चैव तथा मधु॥
मत्स्याशृङ्गाटकयवकशेरुकगोक्षुरम्।
गम्भारी पौष्करं बीजं द्राक्षा खर्ज्जूरकं वला॥
नारिकेलेक्षुात्मगुप्ता विदारी च प्रियालकम्।
मधुकं तालकुष्माण्डं सुखोऽयं मधुरो गणः॥
मूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः।
कृमिकृत् कफकृत् वृष्य एकोऽत्यर्थं निषेवितः॥
श्वासकासास्यमाधुर्य्यस्वरघाताऽर्व्वुदानि च।
गलगण्डश्लीपदानि गुरुलेपादि कारयेत्॥ * ॥
दाडिमामलकाम्रञ्च कपित्थंकरमर्द्दकौ।
मातुलुङ्गाम्रातकञ्च वदरं तिन्तिरीफलम्॥
दधितक्रं काञ्जिकञ्च लकुचं चाम्लवेतसम्।
अम्लो दन्तशठायुक्तो जारणः पाचनो रसः॥
क्लेदनो वातहृत् हृद्यो विदाही चानुलोमनः।
अम्लोऽत्यर्थं सेव्यमानः कुर्य्याद्दन्तहर्षकम्॥
शरीरस्य च शैथिल्यं स्वरकण्ठगलज्वरेत्।
क्षतभिन्नक्षतादीनि पाचयत्यग्निभावतः॥ * ॥
सैन्धवादिर्यवक्षारः सर्ज्जिकादिश्च लावणः।
शोधनः पाचनः क्लेदी विशेषसर्पणादिकृत्॥
मांसमेदोघ्नो मार्दवकृत् स एकः परिषेवितः।
गात्रकण्डूकोठशोफवैवर्ण्यं जनयेत्तथा।
रक्तवातं रक्तपित्तं पुंस्त्वेन्द्रियवधादिकम्॥ * ॥
ओषधिस्तु फलकञ्च देवदारु च कुष्ठकम्।
तथाम्बु अमृतफलं मुस्ता गुग्गुलुलाङ्गली।
कटुको दीपनः शोधी कुष्ठकण्डूकपालहृत्॥
औत्ल्यालस्यकृमिहरः शुक्रमेदोविरोधनः।
एकोऽत्यर्थं सेव्यमानो भ्रमदाहादिकृद्भवेत्॥ * ॥
कृतमालः करीराणि हरिद्रेन्द्रयवास्तथा।
स्वादुकण्टकवेत्राणि वृहतीद्वयशङ्खिनी॥
गुडूची च द्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि।
कारवेल्लकवार्त्ताकुकरवीरकवासकाः॥
रोहिणी शङ्खपुष्पी च कर्कोटो वैजयन्तिका।
जाती वरुणकं निम्बो ज्योतिष्मती पुनर्नवा॥
तिक्तो रसश्छेदनः स्याद्रोचनो दीपनस्तथा।
शोधनो ज्वरतृष्णाघ्नो मूर्च्छाकण्डूतिकादिजित्॥
विण्मूत्रक्लेदसंशोषि अत्यर्थं स च सेवितः।
मन्यास्तम्भाक्षेपकारिशिरःशूलभ्रमादिकृत्॥ * ॥
त्रिफलाशल्लकीजम्बु आम्राम्रातवटादिकम्।
तिन्दुकं वकुलं शाकं निष्पावं सुरभिच्छिका॥"
निष्पावस्थाने पालङ्का इति क्वचित् पाठः।
"कषायो ग्राहको रोपी स्तम्भनः क्लेदशोषणः।
एकोऽत्यर्थं सेव्यमानो हृदयादेश्च पीडकृत्॥
मुखशोषज्वराध्मानमन्यास्तम्भादिकारकः॥ * ॥
हरिद्रा कुष्ठलवणमेषशृङ्गीवलाद्वयम्॥
कच्छूघ्नी शल्लकी पत्नी पुनर्नवा शतावरी।
अग्निमन्थो ब्रह्मदण्डी श्वदंष्ट्रैरण्डकं तथा॥
यवकोलकुलत्थादि कार्पासीदसमूलकम्।
पृथक् समस्तो वाताघ्नो बहुपित्तहरस्तथा॥
शतावरी विदारी च वालकोशीरचन्दनम्।
दूर्व्वा वटः पिप्पली च वदरी शल्लकी तथा॥
कदली चोत्पलं पद्मसुडुम्बरपटोलकम्॥ * ॥
अथ श्लेष्महरो वर्गो हरिद्रा गुडकुष्ठकम्॥
शतपुष्पी च जाती च व्योषारग्वधलाङ्गली॥ * ॥
सर्पिस्तैलवसामज्जा स्नेहेषु प्रवरं घृतम्।
तथाधीस्मृतिमेधाग्निकाङ्क्षिणां शस्यते घृतम्।
केवलं पैत्तिके सर्पिर्व्वातिके लवणान्वितम्॥
देयं बहुकफे वापि व्योषक्षारसमन्वितम्।
ग्रन्थीनाडीकृमिश्लेष्ममेदोमारुतरोगिषु॥ * ॥
तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु।
वातातपाध्वभाराति व्यायामक्षीणधातुषु॥
रूक्षे क्लेशक्षयात्यग्निवाताहृतपथेषु च।
तथा दग्धा हतभ्रष्टा योनिकर्म्मशिरोरुजि॥
उत्तमस्य पलं मात्रा त्रिभिश्चार्द्धेन मध्यमे।
जघन्यस्य पलार्द्धेन स्नेहकार्य्यौषधेषु च॥ * ॥
जलमुष्णं घृते देयं पृथक् तैले न शस्यते।
स्नेहे पीते तु तृष्णायां पिवेदुष्णोदकं नरः॥
वातानुलोमदीप्ताग्निवर्च्चःस्निग्धसमं मतम्।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम्॥
श्यामाककोरदूषान्नतक्रपिण्याकसक्तुभिः।
वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते॥
न स्वेदयेदतिस्थूलरूक्षदुर्व्वलमूर्च्छिताम्॥"
इति गारुडे योगसारे १७७ अध्यायः॥ * ॥

धन्वन्तरिरुवाच।

"तैलादि वक्ष्यामि शृणु सुश्रुत रोगनुत्।
शङ्खपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्च्चला॥
अभया गुडूची चैव अटरूषकवाकुची।
एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्॥
कण्टकार्य्या रसप्रस्थः क्षीरप्रस्थसमन्वितः।
एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम्॥ * ॥
त्रिफलाचित्रकवलानिर्गुण्डीनिम्ववासकाः।
पुनर्नवा गुडूची च वृहती च शतावरी।
एतैर्घृतं यथालाभं सर्व्वरोगविमर्द्दनम्॥ * ॥
वलाशृतकषाये तु तैलस्याढ्काढ्कं पचेत्॥
कल्कैर्म्मधुकमञ्जिष्ठाचन्दनोत्पलपद्मकैः।
सूक्ष्मैलापिप्पलीकुष्ठतगराणुरुकेशरैः॥
गन्धाश्वजीवनीयैश्च क्षीराढकसमाश्रितम्।
एतन्मृद्वग्निना पक्वं स्थापयेद्रजते शुभे॥
सर्व्ववातविकारांस्तु सर्व्वधात्वन्तराश्रयान्।
तैलमेतत् प्रशमयेद्बलाख्यं राजवल्लभम्॥ * ॥
शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च।
शतपुष्पा देवदारु मांसी शैलेयकं वला॥
चन्दनं तगरं कुष्ठं माला चांशुमती तथा।
एतैः कर्षसमैः कल्कैस्तैलप्रस्थं विपाचयेत्॥
कुब्जवामनपङ्गूनां वधिरव्यङ्गकुष्ठिनाम्।
वायुना भग्नगात्राणां ये च सीदन्ति मैथुने॥
जराजर्ज्जरगात्राणां वाध्यानसुखशोषिणाम्।
त्वग्गताश्चापि ये वाताः शिरास्नायुगताश्च ये॥
स वस्तिर्नाशयत्याशु तैलेनैव व्याहृशाङ्गकः।
नारायणमिदं तैलं विष्णुनोक्तं रुगर्द्दनम्॥ * ॥
पृथक् तैलं घृतं कुर्य्यात् समस्तैरौषधैः पृथक्।
शतावर्य्या गुडूच्या वा चित्रके रोचनायुतः॥
निर्गुण्ड्या वा प्रसारण्या कण्टकार्य्या रसादिभिः।
वर्षाभावलया वापि वासकेन फलत्रिकैः॥
ब्राह्म्या चैरण्डकेनापि भृङ्गराजेन सुच्छिना।
मुषल्या दशमूलेन खदिरेण वटादिभिः॥
वटिका मोदको वापि चूर्णं स्यात् सर्व्वरोगनुत्।
घृतेन मधुना वापि युक्तं खण्डगुडादिभिः।
लवणैः कटुकैर्युक्तं यथाभागञ्च रोगनुत्॥
चित्रकार्कत्रिवृतामलत्रयमारकम्।
सुधा च वाला गणिका सप्तपर्णसुवर्चिकाम्॥
ज्योतिष्मतीञ्च संभव्य तैलं धीरो विपाचयेत्।
एतत्स्यन्दनं तैलं भृशं दद्यात् भगन्दरे॥
शोधनं रोचनञ्चैव सर्व्ववर्णकरं परम्।
चित्रकाद्यं महातैलं सर्व्वरोगप्रभञ्जनम्॥
अजमोदः ससिन्दूरो हरितालनिशाद्वयम्।
क्षारद्वयं फेनयुतमार्द्रकं सरलोद्भवम्॥
इन्द्रवारुणपामार्गकदलैः कन्दलैः शुभैः।"
कन्दलैः स्थाने स्यन्दनैः इति च पाठः।
"एभिः सर्षपजं तैलमजामूत्रेण योजितम्।
मृद्वग्निना पचेदेतत् अर्कक्षीरेण संयुतम्॥
अजमोदादिकं तैलं गण्डमालां व्यपोहति।
विदग्धस्तु पचेत् पक्वं पक्वञ्चैव विशोधयेत्॥
रोपणं व्रणभावञ्च तैलेनानेन कारयेत्।
अजमोदादिकं तैलं महावीर्य्यञ्च रोगनुत्॥"
इति गारुडे १७८ अध्यायः॥

रोगहारी, [न्] पुं, (रोगं हरति तच्छीलः। हृ+णिनिः।) वैद्यः। इत्यमरः। २। ६। ५७॥ रोगनाशके, त्रि॥

रोगितरुः, पुं, (रोगिणां शोकनाशकस्तरुः।) अशोकवृक्षः। इति राजनिर्घण्टः॥

रोगिवल्लभं, क्ली, (रोगिणां वल्लभं प्रियम्।) औषधम्। इति शब्दचन्द्रिका॥ रोगिप्रिये, त्रि॥

रोगी, [न्] त्रि, (रोगोऽस्यास्तीति। रोग+इनिः।) रोगयुक्तः। तत्पर्य्यायः। व्याधितः २ विकृतः ३ ग्लानः ४ म्लानः ५ मन्दः ६ आतुरः ७ अभ्यान्तः ८ अभ्यमितः ९ रुग्नः १० सामयः ११ अपटुः १२। इति राजनिर्घण्टः॥ आमयावी १३ ग्लास्नुः १४। इत्यमरः॥ *॥ अथ चिकित्सार्थं रोगिणः परीक्षा। तत्र वाग्भटः।

"दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम्।
आयुरादि दृशा स्पर्शाच्छीतादेः प्रश्नतोऽपरम्॥"

आयुरादि। आदिशब्दात् साध्यत्वासाध्यत्वादि। दृशा दर्शनेन। अत्र सम्पदादिभ्यश्चेति भावे क्विप्। स्पर्शात् शीतादेः। शीतोष्णमृदुकठिनत्वादिना परीक्षणञ्च। प्रश्नतः। उदरलाघवगौरवतृष्णाबुभुक्षाबलाबलादिना॥

"मिथ्या दृष्टा विकारा हि दुराख्यातास्तथैव च।
तथा दुष्परिदृष्टाश्च मोहयेयुश्चिकित्सकान्॥"

तत्र दर्शनं नेत्रजिह्वामूत्रादेः कर्त्तव्यम्॥ *॥ तत्र नेत्रपरीक्षा यथा,—

"नेत्रं स्यात् पवनाद्रूक्षं धूम्रवर्णं तथारुणम्।
कोटरान्तःप्रविष्टञ्च तथाक्षञ्च विलोकनम्॥
हरिद्राभञ्चवर्णञ्च रक्तं वा हरितं तथा।
दीपद्वेषि सदाहञ्च नेत्रं स्यात् पित्तकोपतः॥
चक्षुः श्लेष्मबाहुल्यात् स्निग्धं स्यात् सलिलप्लुतम्।
तथा धवलवर्णञ्च ज्योतिर्हीनं बलान्वितम्॥
नेत्रं द्विदोषबाहुल्यात् स्याद्दोषद्वयलक्षणम्।
त्रिदोषलिङ्गं सैवेत तन्मारयति रोगिणम्॥
त्रिदोषदूषितं नेत्रमन्तर्मग्नं भृशं भवेत्।
त्रिलिङ्गं सलिलस्रावि प्रान्तेनोन्मीलयत्यपि॥" *

अथ जिह्वापरीक्षा।

"शाकपत्रप्रभा रूक्षा स्फुटिता रसनानिलात्।
रक्ता श्यामा भवेत् पित्तात् लिप्ताऽऽर्द्रा धवला कफात्।
परिदग्धा खरस्पर्शा कृष्णा दोषत्रयेऽधिके।
सैव दोषद्वयाधिक्ये दोषद्वितयलक्षणा॥"

अथ मूत्रपरीक्षा।

"वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः।
रक्तमेव भवेद्रक्ताद्धवलं फेनिलं कफात्॥"

अथ शरीरस्य उष्णत्वादिज्ञानार्थं स्पर्शनं कार्य्यम्। तत्र नाडीपरीक्षामाह।

"पुंसो दक्षिणहस्तस्य स्त्रियो वामकरस्य तु।
अङ्गुष्ठमूलगा नाडी परीक्षेत भिषग्वरैः॥
अङ्गुलीभिस्तु तिसृभिर्नाडीमवहितः स्पृशेत्।
तच्चेष्टया सुखं दुःखं जानीयात् कुशलोऽखिलम्॥
सद्यःस्नातस्य सुप्तस्य क्षुत्तृष्णातपशीलिनः।
व्यायामश्रान्तदेहस्य सम्यङ्नाडी न बुध्यते॥
वातेऽधिके भवेन्नाडी प्रव्यक्ता तर्ज्जनीतले।
पित्ते व्यक्ता मध्यमायां तृतीयाङ्गुलिगा कफे॥
तर्ज्जनीमध्यमामध्ये वातपित्तेऽधिके स्फुटा।
अनामिकायां तर्ज्जन्यां व्यक्ता वातकफे भवेत्॥
मध्यमानामिकामध्ये स्फुटा पित्तकफेऽधिके।
अङ्गुलित्रितयेऽपि स्यात् प्रव्यक्ता सन्निपाततः॥
वाताद्वक्रगतिर्नाडी पित्तादुत्प्लुत्य गामिनी।
कफान्मन्दगतिर्ज्ञेया सन्निपातादतिद्रुता॥
वक्रमुत्प्लुत्य चलति धमनी वातपित्ततः।
वहेद्वक्रञ्च मन्दञ्च वातश्लेष्माधिके तथा॥
उत्प्लुत्य मन्दं चलति नाडी पित्तकफेऽधिके।
कामात् क्रोधात् वेगवहा क्षीणा चिन्ताभयप्लुता॥
स्थित्वा स्थित्वा चलेद्या सा हन्ति स्यान्मयुता तथा।
अतिक्षीणा च शीता च प्राणान् हन्ति न संशयः॥
ज्वरकोपेन धमनी सोष्णा वेगवती भवेत्।
मन्दाग्नेः क्षीणधातोश्च सैव मन्दतरा मता॥
चपला क्षुधितस्य स्यात् तृप्तस्य भवति स्थिरा।
सुखिनोऽपि स्थिरा ज्ञेया तथा बलवती मता॥"

इति भावप्रकाशः॥

(लक्षणान्तरादिकमाह।

"रोगो यस्यास्ति रोगी स स चिकित्स्यस्तु यादृशः।
यादृशश्चाचिकित्स्योऽपि वक्ष्यमाणो निशाम्यताम्॥"

तत्र चिकित्स्यः।

"निजप्रकृतिवर्णाभ्यां युक्तः सत्त्वेन चक्षुषा।
चिकित्स्यो भिषजा रोगी वैद्यभक्तो जितेन्द्रियः॥"

सत्त्वं व्यसनाभ्युदयक्रियादिष्वविकलताकरं तेन युक्तः। चक्षुषा चक्षुरुपलक्षितेन। ततोऽन्येनापीन्द्रियेण चिकित्स्यः रोगात् मोचयितव्यः। अन्यच्च।

"आयुष्मान् सत्त्ववान् साध्यो द्रव्यवान् मित्रवानपि।
चिकित्स्यो भिषजा रोगी वैद्यवाक्यकृदास्तिकः॥"

आयुर्व्वेदोऽस्तीति मतिर्यस्य स आस्तिकः॥ अथाचिकित्स्यः।

"चण्डः साहसिको भीरुः कृतघ्नो व्यग्र एव च।
शोकाकुलो मुमूर्षुश्च विहीनः करणैश्च यः॥
वैरी वैद्यविदग्धश्च श्रद्धाहीनश्च शङ्कितः।
भिषजामविधेयाः स्युर्नोपक्रम्या भिषग्विदा॥
एतानुपाचरन् वैद्यो बहून् दोषानवाप्नुयात्॥"

चण्डोऽत्यन्तकोपशीलः। साहसिकः अविचार्य्यकारी। भीरुर्भयशीलः। कृतघ्नो वैद्यकृतोपकारलोपकः। व्यग्रो व्याकुलः। विहीनः करणैश्च यः निजेन्द्रियशक्तिरहितः। वैरी न चिकित्स्यः कदाचिद्रोगोद्रेके अपवादभयात्। वैद्यविदग्धो वैद्यधूर्त्तः। तथा च सुश्रुतः।

"स न सिद्ध्यति वैद्यस्तु यदि यस्य न पूज्यते।"

शङ्कितो वैद्यविश्वासरहितः। भिषजामविधेयाः॥ वैद्यवचनाविधायिनः। भिषग्विधा वैद्यतुल्याः। एते नोपक्रम्याः न चिकित्स्याः। अथ दूतस्य लक्षणम्।

"यश्चिकित्सकमानेतुं याति दूतः स कथ्यते।
स च यादृक् समुचितस्तादृगत्र निगद्यते॥
दूताः सुजातयोऽव्यङ्गाः पटवो निर्म्मलाम्बराः।
सुखिनोऽश्ववृषारूढाः शुभ्रपुष्पफलैर्युताः॥
सजातयः सुचेष्टाश्च सजीवादिशसङ्गताः।
भिषजं समये प्राप्ता रोगिणः सुखहेतवे॥"

सजातयः रोगिसमानजातयः।

"यस्यां प्राणमवहाति सा नाडी जीवसंज्ञिता॥"

अथ दूतस्य यात्रायां शकुनविचारः।

"वैद्याह्वानाय दूतस्य गच्छतो रोगिणः कृते।
न शुभं सौम्य शकुनं प्रदीप्तन्तु सुखावहम्॥"

प्रदीप्तमपि दूतो रोगी रिक्तहस्तो वैद्यं न पश्येत्। तथा च।

"रिक्तहस्तो न पश्येत्तु राजानं भिषजं गुरुम्॥"

इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

रोग्यं, त्रि, (रोगाय हितमिति। रोग+यत्।) अपथ्यम्। अहितम्। इति शब्दचन्द्रिका॥ रोगसम्बन्धिनि च॥

रोचकः, पुं, (रोचयतीति। रुच्+णिच्+ण्वुल्।) क्षुधा। तत्पर्य्यायः। बुभुक्षा २ अशना ३ जिघत्सा ४ रुचिः ५। इति हेमचन्द्रः। ३। ५७॥ कदली। इति शब्दरत्नावली॥ राजपलाण्डुः। अवदंशः। इति राजनिर्घण्टः॥ ग्रन्थिपर्णभेदः। भन्जिडर इति नेपालदेशे ख्यातः। तत्पर्य्यायः। निशाचरः २ धनहरः ३ कितवः ४ गणहासकः ५। अस्य गुणाः। मधुरत्वम्। तिक्तत्वम्। कटुत्वम्। पाके कटुत्वम्। लघुत्वम्। तीक्ष्णत्वम्। उष्णत्वम्। हिमत्वम्। कुष्ठकण्डूकफानिलरक्षोऽश्रीस्वेदमेदोऽस्रज्वरगन्धविसर्पनाशित्वञ्च। इति भावप्रकाशः॥ (काचकूप्यादिकारकः। यथा, रामायणे। २। ८३। १३।

"मायूरकाः क्राकचिका वेधका रोचकास्तथा॥"

"रोचकाः काचकूप्यादिकर्म्मारः इति कतकः।"

इति तट्टीका॥) रुचिकारके, त्रि॥ (यथा, सुश्रुते। १। ४६। मांसवर्गे।

"संग्राही रोचको वल्यस्तेषामेको ज्वरापहः॥")

रोचनः, पुं, (रोचयतीति। रोचि+नन्द्यादित्वात् ल्युः।) कूटशाल्मलिः। इत्यमरः॥ (तस्य पर्य्यायो यथा,—

"कुसितः शाकलिः प्रोक्तो रोचनः कूट-
शाल्मलिः ॥"
इति भावप्रकाशे । १ । १ ॥
काम्पिल्लः । तत्पर्य्यायो यथा,—
"काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनोऽपि
च ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
श्वेतशिग्रुः । पलाण्डुः । आरग्वधः । करञ्जः ।
अङ्कोठः । दाडिमः । इति राजनिर्घण्टः ॥
( देवयोनिविशेषः । यथा, हरिवंशे ।१६६।७५।
"कुम्भाण्डः कुम्भमूर्द्धा च रोचनो वेत्तलीयकः ॥"
हविर्धापुत्त्राणामन्यतमः । स च स्वायम्भुवमन्व-
न्तरे देवविशेषः । इति भागवतम् । ४ । १ । ७ ॥
स्वारोचिषमन्वन्तरे इन्द्रः । इति च तत्रैव ।८।१।
२० ॥ भारतवर्षान्तर्गतपर्व्वतविशेषः । यथा,
मार्कण्डेये । ५७ । १३ ।
"तुङ्गप्रस्थो नागगिरी रोचनः पाण्डराचलः ॥")
त्रि, रोचकः । इति मेदिनी । ने, ११६ ॥ (यथा,
सुश्रुते । १ । ४६ । शाकवर्गे ।
"शृष्यो यां रोचनं हृद्यं सक्षारं लघु दीपनम् ॥"
दीप्तिशाली । यथा, हरिवंशे । १०६ । ३५ ।
"अक्षरं रोचनं चारुशाखं
महाबलं धर्म्मनेतारमीशम् ।
सहस्रनेत्रं शतवर्म्माणमुग्रं
महादेवं विश्वसृजं नमस्ये ॥"
शोभमानः । यथा, भट्टिः । ६ । ७३ ।
"भृङ्गालिकोकिलक्रुड्भिर्वाशनैः पश्य लक्ष्मण ।
रोचनैर्भूषितां पम्पामस्माकं हृदयाविधम् ॥"
अनुरागकरः । यथा, भागवते । १ । १० ।११ ।
"सत्सङ्गान्मुक्तदुःसङ्गो हातुं नोत्सहते बुधः ।
कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् ॥");
रोचनकः, पुं, ( रोचयतीति । रोचि + ल्युः । ततः
कन् ) जम्बीरः । इति राजनिर्घण्टः ॥ ( गुणा-
दयोऽस्य जम्बीरशब्दे ज्ञातव्याः ॥ )
रोचनफलः, पुं, ( रोचनं रुचिकरं फलमस्य । )
बीजपूरकः । । इति राजनिर्घण्टः ॥
रोचनफला, स्त्री, ( रोचनं रोचकं फलमस्याः । )
चिर्भिटा । इति राजनिर्घण्टः ॥
रोचना, स्त्री, ( रोचते या । रुच् + "बहुलमन्य-
त्रापि ।" उणा० २ । ७८ । इति युच् । टाप् ।)
रक्तकह्लारम् । गोपित्तम् । गोरोचना इति
ख्यातम् । ( यथा, मनुः । ८ । २३४ ।
"कर्णौ चर्म्म च वालांश्च वस्तिं स्नायुञ्च रोच-
नाम् ।
पशुषु स्वामिनां दद्यात् मृतेष्वङ्गानि दर्शयेत् ॥")
वरयोषित् । इति मेदिनी । ने, ११८ ॥ ( वसु-
देवपत्नी । यथा, भागवते । ६ । २४ । ४५ ।
"पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकी प्रमुखाश्चासन् पत्न्य आनकदुन्दुभेः ॥")
रोचनिका, स्त्री, ( रोचनैव । स्वार्थे कन् ।
टापि अत इत्वम् । ) वंशरोचना । इति राज-
निर्घण्टः ॥ शुक्लारोचनी । इति रत्नमाला ॥

रोचनी, स्त्री, ( रोचते इति । रुच् + "कृत्यल्युटो
बहुलमिति ल्युट् । ततो ङीष् । ) आमलकी ।
गोरोचना । इति राजनिर्घण्टः ॥ मनःशिला ।
इति हेमचन्द्रः ॥ श्वेतत्रिवृता । गुँड़ारोच-
नीतिख्यातवणिग्द्रव्यम् । तत्पर्य्यायः । काम्पिल्लः २
कर्कशः ३ चन्द्रः ४ रक्ताङ्गः ५ । इत्यमरः ॥
काम्पिल्लः ६ कम्पीलः ७ कम्पिलः ८ काम्पिल्यः ९
रेचनी १० । इति भरतः ॥ पर्य्यायान्तरं गुणाश्च
कम्पिल्लकशब्दे द्रष्टव्याः ॥
रोचमानः, पुं, ( रोचते इति । रुच् + शानच् । )
अश्वग्रीवास्थरोमावर्त्तः । यथा,—
"श्रीवृक्षो हृदयावर्त्तो रोचमानो गलोद्भवः ॥"
इति त्रिकाण्डशेषः ॥
( यथा, माघे । ५ । ४ ।
"अश्वाः प्यधुर्व्वसुमतीमतिरोचमाना-
स्तूर्णं पयोधय इवोर्म्मिभिरापतन्तः ॥"
नृपविशेषः । यथा, महाभारते । १ । ६७।१८ ।
"अश्वग्रीव इति ख्यातः सत्त्ववान् यो महा-
सुरः ।
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः ॥"
दीप्यमाने, त्रि । यथा, कथासरित्सागरे ।
७४ । ७८ ।
"रोचमानैः समायुक्तचूड़ामण्यङ्गदादिभिः ।
गन्धर्व्वकुलसम्भूतिसंसिद्धैरिव भूषितम् ॥" )
रोचिः, [ स् ] स्त्री, ( रोचतेऽनेनेति । रुच् +
बाहुलकात् इसिन् । इत्युज्ज्वलः । २ ।११२ ।)
प्रभा । इत्यमरः ॥ ( यथा, माघे । १ । २१ ।
"रथाङ्गपाणेः पटलेन रोचिषा-
मृषित्विषः संवलिता विरेजिरे ॥" )
रोचिष्णुः, त्रि, ( रोचते तच्छीलः । रुच् + "अलं
कृञ् निराकृञिति ।" ३ । २ । १३६ । इति
इष्णुच् । ) अलङ्कारादिना दीप्तिशीलः । तत्-
पर्य्यायः । विभ्राट् २ भ्राजिष्णुः ३ । इत्यमरः ॥
( यथा, कथासरित्सागरे । ६४ । ६ ।
"तत्र सूकरवृन्दानि भिन्दन् बाणैर्निरन्तरम् ।
श्यामलाम्बररोचिष्णुस्तमांसीव रविः करैः ॥"
रोचकः । यथा, सुश्रुते । १ । ४५ । मद्यवर्गे ।
"सुगन्धि दीपनं हृद्यं रोचिष्णु कृमिनाशनम् ॥")
रोची, स्त्री, ( रोचते इति । रुच् + इन् । वा
ङीष् । ) हिलमोचिका । इति शब्दरत्नावली ॥
रोची, [ न् ] त्रि, (रोचते इति । रुच् + णिनिः ।)
रोचिष्णुः । इति हेमचन्द्रः ॥
रोच्यं, त्रि, ( रुच् + ण्यः । "यजयाचरुचप्रवच-
र्चश्च ।" ७ । ३ । ६६ । इति कवर्गादेशो न ।)
प्रकाश्यम् । प्रीतिविषयः । रुचधातोः कर्म्मणि
यप्रत्ययेन निष्पन्नोऽयम् ॥
रोट्, [ श् ] त्रि, (रुष् + "अन्येभ्योऽपि दृश्यन्ते ।"
३ । २ । ७५ । इति विच् । ) हिंस्रः । वधकः ।
रोषतीति विचि गुणः । इति मुग्धबोधटीकायां
दुर्गादासः ॥
रोटिका, स्त्री, पिष्टकविशेषः । रोटी इति रुटी
इति च भाषा । तत्करणप्रकारमाह ।

"शुष्कगोधूमचूर्णेन किञ्चित् पुष्टां सुशीतलाम् ।
तप्तके खेदयेत् त्वत्वा भूयोऽङ्गारेऽपि तां पचेत् ।
सिद्धैषा रोटिका प्रोक्ता गुणांस्तस्याः प्रचक्षते ।
रोटिका बलकृद्रुच्या बृंहणी धातुवर्द्धनी ।
वातघ्नी कफकृद्गुर्व्वी दीप्ताग्नीनां प्रपूजिता ॥"
अथ लेटी ।
"सुद्धगोधूमचूर्णन्तु सम्यगार्द्रं विमर्द्दयेत् ।
विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत् ॥
अङ्गारकर्कटी ख्याता बृंहणी शुक्रला लघुः ।
दीपनी कफकृद्बल्या पीनसश्वासकासजित् ॥"
अथ यवरोटिका ।
"यवजा रोटिका रुच्या मधुरा विशदा लघुः ।
मलशुक्रानिलकरी बल्या हन्ति कफामयान् ।
पीनसश्वासकासांश्च मेदोमेहगलामयान् ॥"
अथ माषरोटिका ।
"चूर्णं यच्छुष्कमाषाणां चणकी साभिधीयते ।
चणकीरचिता रोटी कथ्यते वलभद्रिका ॥
रूक्षोष्णा वातला बल्या दीप्ताग्नीनां प्रपूजिता ॥
माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुकाः ।
आतपे शोषिता यत्ने पिष्टास्ता धमसी स्मृता ।
धूमसीरचिता सैव प्रोक्ता झर्झरिका बुधैः ॥"
झर्झरिकास्थाने सुर्भुरिका इति गुर्गुरिका
इति वा पाठः ।
"झर्झरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता ॥"
अथ चणकरोटिका ।
"चाणक्या रोटिका रूक्षा श्लेष्मपित्तास्रनुद्गुरुः ।
विष्टम्भिनी न चक्षुष्या तद्गुणा तिलशष्कुली ॥"
इति भावप्रकाशः ॥
रोड, ऋ अनादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-
पर०-सक०-सेट् । ) ऋ, अररोड़त् । इति
दुर्गादासः ॥
रोदः, [स्] क्ली ( रुद् + असुन् ।) स्वर्गः । भूमिः ।
इति मेदिनी । से, ३३ ॥ ( यथा, ऋग्वेदे । ६ ।
२२ । ५ ।
"एते पृष्ठानि रोदसोर्विप्रयन्तो व्यानशुः ॥" )
रोदनं, क्ली, ( रुद् + ल्युट् । ) क्रन्दनम् । ( यथा,
चाणक्यशतके । ६२ ।
"दुर्ब्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥")
अस्रु । इति मेदिनी । ने, ११६ ॥ तस्य शुभाशुभं
यथा,—
"आनम्रं स्निग्धरुदितमदीनं शुभदं नृणाम् ।
प्रचुरास्रं दीनं रूक्षञ्च रुदितं न सुखावहम् ॥"
इति गारुडे ६६ अध्यायः ॥
कपिलाधेनूनां नेत्राम्बुना रत्नसमुद्रो जातः ।
यथा,—
"युद्धे मुनिं मृतं दृष्ट्वा रुरोद कपिला सुखुः ॥"
इत्युपक्रम्य ।
"तदस्रुबिन्दुना मर्त्ये रत्नसंघो बभूव ह ॥"
रोदनाश्रुपतनेन मृतानां नरकं स्यात् । यथा,—
"शाखिनो मा रुदन्त्येव मा रोदीः पुत्र साम्प्र-
तम् ।

रोदनाश्रुप्रपतनादृक्ततानां नरकं ध्रुवम् ॥”

इति ब्रह्मवैवर्त्ते ब्रह्मपतिखण्डे २७ अध्यायः ॥

मृतसुहृद्विषये रोदननिषेधो यथा,—

“श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्य्या विधानतः ॥”

इति शुद्धितत्त्वम् ॥

रोदनिका, स्त्री, (रोदनं अश्रु पातत्वेनास्त्यस्येति । रोदन+ठन् ।) यवासः । इति राजनिर्घण्टः ॥ ( विवरणोऽस्य यवासशब्दे ज्ञातव्यः ॥ )

रोदनी, स्त्री, (रुद्यतेऽनयेति । रुद्+करणे ल्युट् । ङीप् । ) दुरालभा । इत्यमरः । २ । ४ । ९२ ॥

रोदसी, स्त्री, ( रोदस्+गौरादित्वात् ङीष् । ) स्वर्गः । भूमिः । इत्यमरः । ३ । ३ । २२८ ॥

रोदसी, व, स्वर्गः । भूमिः । यथा,—

“द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च ॥”

इति भरतधृतकोषः ॥

रोदस्यौ, स्त्री, भूमिस्वर्गौ । यथा,—

“प्रकरणापि भूद्यावौ रोदस्यौ रोदसी च ते ॥”

इत्यमरः । ३ । ३ । २२८ ॥

“भूर्भूमिः द्यौराकाशं एते सहिते विग्रहीते च रोदसीरोदःशब्दयोर्वाच्ये इति भूद्यावौ पराक्षते एतेन ईकारान्तसान्तशब्दद्वयेन एकवचनान्तेनापि भूद्यावौ समुदिते उच्येते ।

‘रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक् ।
बहु प्रयोगेऽप्यनयो रोदः स्यादपि रोदसी ॥’

इति विश्वः ॥

‘रोदसी रोदसा सार्द्धं पृथ्वीस्वर्गे दिवि स्थितौ ॥’

इत्यजयः ॥

रोदसीत्यव्ययमप्यस्ति । यथा । द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति चेति ।” इति तट्टीकायां भरतः ॥

रोधः, पुं, ( रुणद्धि जलमिति । रुध्+पचाद्यच् ।) नदीतीरम् । इत्यमरटीकायां भरतः ।१।१०।७॥ ( रुध्+घञ् । रोधनम् । यथा, मार्कण्डेये । १३ । १ ।

“अहं वैश्यकुले जातो जन्मन्यस्मात् सप्तमे ।
समतीते गवां रोधं निपाने कृतवान् पुरा ॥” )

रोधः, [स्] क्ली, (रुणद्धि वार्य्यादिकमिति । रुध+“सर्व्वधातुभ्योऽसुन् ।” उणा० ४ । १८८ । इति असुन् ।) नदीतीरम् । इत्यमरः । १ । १० । ७ ॥ (यथा, रघुः । ५ । ४२ ।

“स नर्म्मदारोधसि सीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम् ॥” )

रोधनः, त्रि, (रुणद्धीति । रुध+ल्युः ।) रोधकर्त्ता । ( रुध्+भावे ल्युट् । ) रोधे, क्ली । इति व्याकरणम् ॥ ( यथा, भागवते । ३ । ३० । २७ ।

“पातनं गिरिदुर्गेभ्यो रोधनं चाम्बुगर्त्तयोः ॥”)

रोधवक्रा, स्त्री, ( रोधेन वक्रा । ) नदी । यथा । निम्नगा रोधवक्रा च स्रवन्ती सिन्धुरापगेति नदीपर्य्याये भागुरिः । इति भरतः ॥

रोधोवक्रा, स्त्री, ( रोधसा वक्रा । ) नदी । इति त्रिकाण्डशेषः ॥

रोधोवती, स्त्री, (रोधोऽस्त्यस्या इति । रोधस्+मतुप् । ङीप् । ) नदी । इति राजनिर्घण्टः ॥

रोध्रं, क्ली, (रुध्यतेऽनेन । रुध+बाहुलकात् रन् ।) अपराधः । पापम् । इति मेदिनी । रे, ८१ ॥

रोध्रः, पुं, लोध्रः । इति मेदिनी राजनिर्घण्टश्च ॥ ( यथा, सुश्रुते । १ । १२ ।

“मधूच्छिष्टं समधुकं रोध्रं सर्ज्जरसं तथा ।
मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्व्विपाचयेत् ॥”)

रोध्रपुष्पः, पुं, (रोध्रस्येव पुष्पमस्य ।) मधूकवृक्षः । इति राजनिर्घण्टः ॥ ( मण्डलिसर्पजातिविशेषः । तद्यथा ।“आदर्शमण्डलः श्वेतमण्डलो रक्तमण्डलश्चित्रमण्डलः पृषतो रोध्रपुष्पो मिलिन्दको गोनसः इत्यादिषु ।” इति सुश्रुते कल्पस्थाने चतुर्थेऽध्याये ॥ )

रोध्रपुष्पिणी, स्त्री, (रोध इव पुष्प्यतीति । पुष्प+णिनि । ङीप् । ) धातकीवृक्षः । इति राजनिर्घण्टः ॥

रोपः, पुं, ( रुप्यतेऽनेनेति । रुप विमोहे+घञ् ।) बाणः । इत्यमरः ॥ ( रुह+णिच्+घञ् । ) रोपणम् । इति मेदिनी । पे, २ ॥ (यथा, महाभारते । १३ । ५८ । २४ ।

“एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ॥”)

छिद्रं, क्ली । इति हेमचन्द्रः ॥

रोपणं, क्ली, विमोहनम् । रुपधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम् ॥ जननम् । प्रादुर्भावः । जन्मरुहधातोः पकारादेशे अनट्प्रत्ययेन निष्पन्नम् । इति व्याकरणम् ॥ ( यथा, सुश्रुते । १ । १५ ।

“सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्य्यकृत् श्लेष्मा पञ्चधा प्रविभक्त उदकर्म्मानुग्रहं करोति ॥” )

अञ्जनविशेषः । यथा,—

“रोपणं रसकं पिष्ट्वा सम्यक् संप्लाव्य वारिणा ।
गृह्णीयात्तज्जलं सर्व्वं त्यजेच्चूर्णमधोगतम् ॥
शुष्कञ्च तज्जलं सर्व्वं पर्पटीसन्निभं भवेत् ।
विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः ॥
कर्पूरस्य रसस्तत्र दशमांशेन निक्षिपेत् ।
अञ्जयेन्नयने तेन नेत्राखिलगदच्छिदः ॥”

इति भावप्रकाशः ॥

( त्रि, रोपकः । यथा, सुश्रुते । ६ । १८ ।

“लेखनात् त्रिगुणो धार्य्यः पुटपाकस्तु रोपणः ॥”

व्रणरोगे मांसाङ्कुरजननार्थप्रक्रियादिकम् । तद्यथा,—

“आदौ विम्लापनं कुर्य्याद्द्वितीयमवसेचनम् ।
तृतीयमुपनाहञ्च चतुर्थीं पाटनक्रियाम् ॥
पञ्चमं शोधनञ्चैव षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमो वै लतापहः ॥
निम्बपत्रतिलैः कल्को मधुना व्रणशोधनः ।
रोपणः सर्पिषा युक्तो यवकल्कोऽप्ययं विधिः ॥”

इति वैद्यकचक्रपाणिसंग्रहे व्रणशोथाधिकारे ॥)

रोपणचूर्णं, क्ली, ( रोपणस्य चूर्णम् ।) नयनाञ्जनविशेषः । यथा, भावप्रकाशे ।

अथ रोपणचूर्णम् ।

“शिलायां रसकं पिष्ट्वा सम्यगाप्लाव्य वारिणा ।
गृह्णीयात् तज्जलं सर्व्वं त्यजेच्चूर्णमधोगतम् ॥
शुष्कं तच्च जलं सर्व्वं पर्पटीसन्निभं भवेत् ।
विचूर्ण्य भावयेत् सम्यक् त्रिवेलं त्रिफलारसैः ॥
कर्पूरस्य रजस्तत्र दशमांशेन निक्षिपेत् ।
अञ्जयेन्नयनं तेन सर्व्वदोषोपशान्तये ॥
समस्तनेत्ररोगघ्नं चूर्णमेतन्न संशयः ॥”

रोपणीवर्त्तिः, स्त्री, नेत्राञ्जनभेदः । यथा । अथ रोपणीवर्त्तिः ।

“अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
जातीपुष्पाणि पञ्चाशन्मरिचानि च षोडश ॥
सूक्ष्मं पिष्ट्वाम्बुना वर्त्तिः कृता कुसुमिकाभिधा ।
तिमिरार्ज्जुनशुक्राणां नाशिनी मांसवृद्धिनुत् ।
एतस्या अञ्जने प्रोक्ता मात्रा सार्द्धहरेणुका ॥”

कुसुमिकावटी रोपणी । इति भावप्रकाशः ॥

रोप्यातिरोप्यः, पुं, धान्यविशेषः । अस्य गुणाः ।

“रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
अदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥”

इति राजवल्लभः ॥

रोमं, क्ली, जलम् । इति शब्दचन्द्रिका ॥ (लोम । यथा, महाभारते । १ । ११२ । १ ।

“द्वौ चास्य पिण्डावधरेण कण्ठा-
दजातरोमौ सुमनोहरौ च ॥”

जनपदविशेषः । इति केचित् ॥ )

रोम, [न्] क्ली, ( रौतीति । रु+“नामन्सीमन्व्योमन्रोमन्निति ।” उणा० ४ । १५० । इति मनिन्प्रत्ययेन साधुः ।) शरीरजाताङ्कुरः । रोँया इति भाषा । तत्पर्य्यायः । लोम २ अङ्गजम् ३ त्वग्जम् ४ चर्म्मजम् ५ तनूरुहम् ६ । इति राजनिर्घण्टः ॥ स्थानविशेषे तस्य शुभाशुभसूचकत्वं यथा,— .

“अल्परोमयुता श्रेष्ठा जङ्घा हस्तिकरोपमा ।
रोमैकैकं कूपके स्यान्नृपाणान्तु महात्मनाम् ॥
द्वे द्वे रोमे पण्डितानां श्रोत्रियाणान्तथैव च ।
रोमत्रयं दरिद्राणां रोगी निर्म्मांसजानुकः ॥”

इति गारुडे ६१ अध्यायः ॥

रहस्यरोम्णोऽस्पृश्यत्वं यथा,—

“न सर्पशस्त्रैः क्रीडेत स्वानि खानि न संस्पृशेत् ।
रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् ॥”

इति कौर्म्मे उपविभागे १५ अध्यायः ॥

( जनपदविशेषः । तद्देशवासिनि । पुं भूम्नि । यथा, महाभारते । ६ । ९ । ५५ ।

“वानायवो दशाःपार्श्वा रोमाणः कुशविन्दवः ॥”)

रोमकं, क्ली, ( रोमे कायतीति । कै+कः । ) पांशुलवणम् । ( यथा, सुश्रुते । १ । ४२ ।

“सैन्धवसौवर्च्चलविड्पाक्यरोमकसामुद्रकपक्त्रिमयवक्षारौषरप्रसूतसुवर्च्चिकाप्रभृतीनि समासेन लवणो वर्गः ॥”) अयस्कान्तभेदः । इति राजनिर्घण्टः ॥ ( रोमैव । जनपदविशेषः । तद्देशवासिनि, पुं भूम्नि । यथा, महाभारते ।२।५०।१५।

“औष्णीकानन्तवासांश्च रोमकान् पुरुषादकान् ॥”)

रोमकन्दः, पुं, ( रोमयुक्तः कन्दो मूलमस्य । ) पिण्डालुः । इति राजनिर्घण्टः ॥

रोमकपत्तनं, क्ली, ( रोमकं पत्तनमिति कर्म्मधारयः । ) देशविशेषः । रुम् इति पारस्यभाषा । यथा,—

"लङ्काकुमध्ये यमकोटिरस्याः
प्राक् पश्चिमे रोमकपत्तनञ्च ।
अधस्ततः सिद्धपुरं सुमेरुः
सौम्येऽथ याम्ये वडवानलञ्च ।
कुवृत्तपादान्तरितानि तानि
स्थानानि षड् गोलविदो वदन्ति ॥"

इति सिद्धान्तशिरोमणौ गोलाध्यायः ॥

रोमकूपः, पुं, ( रोम्णां कूपः । ) लोमविवरम् । यथा,—

"प्रजापतिश्चाक्षमालां ददौ ब्रह्मा कमण्डलुम् ।
समस्तरोमकूपेषु निजरश्मीन् दिवाकरः ॥"

इति मार्कण्डेयपुराणे देवीमाहात्म्यम् ॥

( तथा च ।

"जङ्घे नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्त्तते ॥"

इति वाभटे निदानस्थाने तृतीयेऽध्याये ॥ )

रोमकेशरं, क्ली, ( रोम्णां केशरमिव । ) चामरम् । इति त्रिकाण्डशेषः ॥

रोमगुच्छः, पुं, ( रोम्णां गुच्छस्तवकः । ) चामरम् । इति हेमचन्द्रः । २ । ३८१ ॥ हारावली च । १७३ ॥

रोमगुच्छकः, पुं, ( रोमगुच्छ एव । स्वार्थे कन् । ) चामरम् । इति जटाधरः ॥

रोमन्थः, पुं, उद्गीर्य्य चर्व्वणम् । इत्यमरः ॥ जाओरकाटा इति भाषा ॥ ( यथा, रघुः । १ । ५२ ।

"लग्नैर्वर्त्तितरोमन्थसुटजाङ्गनभूमिषु ॥" )

रोमभूमिः, स्त्री, ( रोम्णां भूमिरिव । ) चर्म्म । इति राजनिर्घण्टः ॥

रोमलता, स्त्री, ( रोम्णां लतेव । ) लोमावलिः । इति हेमचन्द्रः । ३ । २७० ॥

रोमवान्, [ त् ] त्रि, लोमविशिष्टः । रोमशब्दादस्त्यर्थे मतुप्प्रत्ययेन निष्पन्नः ॥

रोमविकारः, पुं, ( रोम्णां विकारः । ) रोमाञ्चः । इति हलायुधः ॥

रोमशः, पुं, ( रोमाणि सन्त्यस्येति । रोमन् + "लोमादिपामादिपिच्छादिभ्यः शनेलचः ।" ५ । २ । १०० । इति शः । ) मेषः । इति हेमचन्द्रः ॥ पिण्डालुः । कुम्भी । शूकरः । इति राजनिर्घण्टः ॥ ( ऋषिविशेषः । यथा, भागवते । ६ । १५ । १४ ।

"रोमशश्च्यवनो दत्त आसुरिः सपतञ्जलिः ॥"

अस्य ऋषेरेकलोमपतने एकेन्द्रपातो भवेत् एवं सर्व्वलोमपतनकालस्तस्य परमायुः । एतादृशोऽप्ययमौ औधामि वा कियन्ति दिनानीति चिन्तयन् निवसु ' एवं न निर्म्मे केवलं वर्षासु धारापातनिवृत्तये मस्तकविन्यस्तकटखण्डमपचरति । विशेषविवरणमस्य ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे

हृदयम् ॥ स्त्री, उपस्थम् । यथा, ऋग्वेदे । १० । ८६ । १६ ।

"सेदीशे यस्य रोमशं निषेदुषो
विजृम्भते विश्वस्मादिन्द्र उत्तरः ॥"

"निषेदुषः शयानस्य रोमशमुपस्थं विजृम्भते विस्तृतं भवति ।" इति तद्भाष्ये सायणः ॥ )

अतिशयलोमविशिष्टे, त्रि ॥ ( यथा, मनुः । ३ । ७ ।

"हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ॥" )

रोमशफलः, पुं, ( रोमशं फलमस्य । ) टिण्डिशवृक्षः । इति राजनिर्घण्टः ॥

रोमशा, स्त्री, ( रोमाणि सन्त्यस्या इति । रोमन् + शः । टाप् ।) दग्धारुहः । इति राजनिर्घण्टः ॥ लोमशा च ॥ ( बृहस्पतिकन्या । यथा, ऋग्वेदे । १ । १२७ । ७ ।

"सर्व्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥" )

रोमशूकं, क्ली, ( रोमयुक्तं शूकं यस्य । ) स्थौणेयकम् । इति भावप्रकाशः ॥

रोमहर्षः, पुं, ( रोम्णां हर्षः । ) रोमाञ्चः । इति हलायुधः ॥ ( यथा, गीतायाम् । १ । २९ ।

"वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥" )

रोमहर्षणं, क्ली, ( रोम्णां हर्षणम् ।) रोमाञ्चः । इत्यमरः ॥ ( रोम्णां हर्षणं यस्मात् । रोमाञ्चकरे, त्रि । यथा, गीतायाम् । १८ । ७४ ।

"संवाददमिदमश्रौषमद्भुतं लोमहर्षणम् ॥" )

रोमहर्षणः, पुं, सूतः । अस्य व्युत्पत्तिर्यथा,—

"अस्य ते सर्व्वरोमाणि वचसा हृषितानि यत् ।
द्वैपायनस्य भगवंस्ततो वै रोमहर्षणः ।
भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ॥"

इति कौर्म्मे १ अध्यायः ॥

( स तु व्यासशिष्यः । यथा, भागवते । १० । ७८ । २२ ।

"सोऽर्च्चितः सपरीवारः कृतासनपरिग्रहः ।
रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥"

अस्याप्यद्विवरणं लोमहर्षणशब्दे द्रष्टव्यम् ॥ )

विभीतकवृक्षः ॥ इति मेदिनी । णे, ११६ ॥

रोमाञ्चः, पुं, ( रोम्णां अञ्चः उद्गमः । ) रोमहर्षणम् । इत्यमरः ॥ पुलककण्टकरोमविक्रिया रोमोद्गमरोमहर्षाश्च । इति भरतः ॥ ( स तु सात्त्विकभावानामन्यतमः । यथा, साहित्यदर्पणे । ३ । १६६ ।

"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥"
"हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥" )

रोमाञ्चिका, स्त्री, ( रोमाञ्च उत्पाद्यत्वेनास्त्यस्या इति । रोमाञ्च + ठन् । ) रुदन्तीवृक्षः । इति राजनिर्घण्टः ॥

रोमाञ्चितः, त्रि, ( रोमाञ्चः सञ्जातोऽस्येति । रोमाञ्च + "तदस्य सञ्जातं तारकादिभ्य इतच् ।" ५ । २ । ३६ । इति इतच् । ) जातपुलकः । रोमाञ्चविशिष्टः । तत्पर्य्यायः । हृष्टरोमा २ । इति त्रिकाण्डशेषः ॥ ( यथा, मार्कण्डेये । १०० । २० ।

"स च शान्तिगते वह्नौ परितुष्टेन चेतसा ।
हर्षरोमाञ्चिततनुः प्रविवेशाश्रमं गुरोः ॥" )

रोमाली, स्त्री, ( रोम्णां आली श्रेणिर्यत्र । ) वयःसन्धिः । इति शब्दमाला ॥ ( रोम्णां आली । ) रोमावली । ( यथा, आर्य्यासप्तशत्याम् । ३३८ ।

"निधिनिःक्षेपस्थानस्योपरि चिह्नार्थमिव
लता निहिता ।
शोभयति तव तनूदरि जघनतटाद्युपरि
रोमाली ॥" )

रोमालुः, पुं, ( रोमविशिष्ट आलुः । ) पिण्डालुः । इति राजनिर्घण्टः ॥

रोमालुविटपी, [ न् ] पुं, ( रोमालुरिव विटपी वृक्षः । ) कुम्भीवृक्षः । इति राजनिर्घण्टः ॥

रोमावली, स्त्री, ( रोम्णामावली । ) नाभिकन्दलोमश्रेणी । तत्पर्य्यायः । रोमलता २ । इति हेमचन्द्रः । ३ । २७० ॥ रोमाली ३ । इति शब्दमाला ॥ लोमराजी ४ । यथा,—

"तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजी ।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥"

इति कुमारसम्भवम् ॥

सा च यौवनारम्भे भवति । अज्ञातयौवना यथा,—

"नीरान्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोणे लग्नमिदं किमुत्पलमिति ज्ञातुं करं
न्यस्यति ।
सेवालाङ्कुरशङ्कया शशिमुखी रोमावलीं
प्रोञ्छति
आन्तालीति मुहुः सखीमविदितश्रोणीभरा
पृच्छति ॥"

इति रसमञ्जरी ॥

रोमाश्रयफला, स्त्री, ( रोमाश्रयं फलमस्याः । ) भिञ्झिरिटाक्षुपः । इति राजनिर्घण्टः ॥

रोमोद्गमः, पुं, ( रोम्णामुद्गमः । ) रोमाञ्चः । इति हलायुधः ॥ ( यथा, कुमारे । ७ । ७७ ।

"रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥" )

रोमोद्भेदः, पुं, ( रोम्णामुद्भेदः । ) रोमाञ्चः । इति त्रिकाण्डशेषः ॥ ( यथा, प्रबोधचन्द्रोदये । १ अङ्के ।

"स्फुरद्रोमोद्भेदस्तरलतरताराकुलदृशो
भयोत्कम्पोत्तुङ्गस्तनयुगभरासङ्गसुभगः ॥" )

रोलः, पुं, पानीयामलकम् । इति शब्दचन्द्रिका ॥ ( पानीयामलकशब्देऽस्य गुणादयोऽभिहिताः ॥ )

रोलम्बः, पुं, ( रौतीति । रु + क्विप् । रौः कूजन् सन् लम्बति स्थानात् स्थानान्तरं गच्छतीति । लम्ब + अच् । ) भ्रमरः । इति त्रिकाण्डशेषः ॥

( यथा, वक्रोक्तिपञ्चाशिकायाम् । ४० ।
"गाङ्गे दानवनाशिनो गणपतेः कुर्व्वन्ति कोलाहलं
रोलम्बा इत्युदस्तुनाशनविधौ सक्ताः स्फुरेते कथम् ।" )

रोषः, पुं, ( रुष्+घञ् । ) क्रोधः । इत्यमरः ॥ ( यथा, आर्य्यासप्तशत्याम् । ४४६ ।
"सुखयसि किं मानवतीं व्यवसायादृद्दिगुणमन्यु-वेगेति ।
कोहभवः प्रथसायिः सान्त्वेन च रोष उच्छि-षति ।" )

रोषणः, पुं, ( रोषति तच्छीलः । रुष्+"क्रुध-मण्डार्थेभ्यश्च ।" ३ । २ । १५१ । इति युच् । ) पारदः । हेमघर्षणोपलः । इति मेदिनी । ने, ७३ ॥ ऊषरभूमिः । क्रोधने, त्रि । इति हेम-चन्द्रः ॥ ( यथा, मार्कण्डेये । ११२ । १५ ।
"न धर्म्मः क्रोधशीलस्य नार्थश्चाप्नोति रोषणः ।
नालं सुखाय कामाप्तिः कोपेनाविष्टचेत-साम् ॥" )

रोहः, पुं, ( रोहतीति । रुह्+अच् । ) अङ्कुरः । इति हेमचन्द्रः ॥ ( यथा, महाभारते । १२ । १२० । ३८ ।
"अग्निः स्तोको वर्द्धतेऽप्याज्यसिक्तो
बीजञ्चैकं रोहसाहस्रमेति ।
आयव्ययौ विपुलौ सन्निशाम्य
तस्मादल्पं नावमन्येत वित्तम् ॥"
रोहणीये, त्रि । यथा, वाजसनेयसंहिता-याम् । १३ । ५१ ।
"तेन रोहमायन्नुप मेध्यासः ।"
"रोहं रोहणीय स्वर्गम् ।" इति तद्भाष्ये महीधरः ॥ )

रोहकः, पुं, ( रुह्+ण्वुल् । ) प्रेतभेदः । वोढ़रि, त्रि । इति मेदिनी । के, १४६ ॥ ( यथा, महाभारते । ८ । ३४ । ३२ ।
"सिनीवालीमनुमतिं कुहूं राकाञ्च सुव्रताम् ।
योक्त्राणि चक्रुर्वाहानां रोहकांस्तत्र कण्ट-कान् ॥" )

रोहणं, क्ली, ( रोहत्यनेनेति । रुह्+करणे ल्युट् । ) शुक्रम् । इति राजनिर्घण्टः ॥ जन्म । प्रादुर्भावः । इति रुहधातोर्भावेऽनट्प्रत्ययेन निष्पन्नम् ॥

रोहणः, पुं, ( रोहत्यस्मिन्निति । रुह्+अधि-करणे ल्युट् । ) पर्व्वतविशेषः । तत्पर्य्यायः । विदूराद्रिः २ । इति जटाधरः ॥ ( यथा, राजेन्द्रकर्णपूरे । ५२ ।
"अपारपुलिनस्थलीभुवि हिमालये मालये
नितान्तविकटोन्नते दुरधिरोहणे रोहणे ।
महत्यमरभूधरे गहनकन्दरे मन्दरे
भ्रमन्ति न पतन्त्यहो परिवृता भवत्कीर्त्तयः ॥" )

रोहन्तः, पुं, ( वहतीति । रुह्+"दृहिनन्दि-जीविप्राणिभ्यः षिदाशिषि ।" उणा० ३ । १२७ । इति झच् । ) वृक्षभेदः । इत्युणादि-कोषः ॥ वृक्षमात्रम् । इति संक्षिप्तसारोणादि-वृत्तिः ॥

रोहन्ती, स्त्री, ( रुह्+झच् । षित्वात् ङीष् । ) लताभेदः । इत्युणादिकोषः ॥ लतामात्रम् । इति संक्षिप्तसारोणादिवृत्तिः ॥

रोहिः, पुं, ( रोहतीति । रुह्+"कृपिवि-रुहीति ।" उणा० ४ । ११८ । इति इन् । ) बीजम् । वृक्षः । इत्युणादिकोषः ॥ धार्म्मिकः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

रोहिणं, क्ली, ( रुह्+"रुहेश्च ।" उणा० २ । ५५ । इति इनन् । ) कालभेदः । इत्युणादि-कोषः ॥ स तु दिवसीयनवममुहूर्त्तः । पूर्व्वाह्न-श्राद्धस्य गौणकालत्वेनोत्तरावधिः । अपराह्न-श्राद्धस्य पूर्व्वावधिः । एकोद्दिष्टश्राद्धस्य समा-पनकालः । रौहिणञ्चास्य नामान्तरम् । यथा । अत्र पूर्व्वाह्णे श्राद्धमभिधाय रौहिणन्तु न लङ्घयेदित्यभिधानेन पूर्व्वाह्णश्राद्धस्य सङ्गवात् परो रौहिणपर्य्यन्तगौणपूर्व्वाह्णकालः प्रतीयते तेन रौहिणं पूर्व्वाह्णश्राद्धस्य गौणकालत्वेनो-त्तरावधिः अपराह्णश्राद्धस्य पूर्व्वावधिरित्यव-गम्यते । रौहिणन्तु दिवसस्य नवममुहूर्त्तः । तस्य ज्योतिषोक्तरोहिणीदैवतत्वात् रौहिणत्व-मिति । व्यासः ।
"आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत् ॥"
इति श्राद्धतत्त्वम् ॥

रोहिणः, पुं, (रोहतीति । रुह्+"रुहेश्च ।"उणा० २ । ५५ । इति इनन् । ) भूतृणः । वटवृक्षः । रोहितकवृक्षः । इति राजनिर्घण्टः ॥ (शाल्मल-द्वीपस्थपर्व्वतविशेषः । यथा, मात्स्ये । १२२।८६।
"रोहितो यस्तृतीयस्तु रोहिणो नाम विश्रुतः ॥")

रोहिणिः, स्त्री, रोहिणीनक्षत्रम् । इति शब्द-रत्नावली ॥ (यथा, बृहत्संहितायाम् ।१०७।४।
"धारणवर्षणरोहिणि-
वायव्याषाढ़भङ्गपदयोगाः ।
चन्द्रवृष्टिः कुसुमलता
सन्ध्याचिह्नं दिग्दाहः ॥" )

रोहिणिका, स्त्री, ( रोहिण्येव स्वार्थे कन् । टाप् ह्रस्वश्च । ) कोपादिना रक्तवर्णा स्त्री । इति जटाधरः ॥

रोहिणी, स्त्री, ( रुह्+इनन् । गौरादित्वात् ङीष् । ) स्त्रीगवी । इत्यमरः ॥ (यथा, माघे । १२ । ४० ।
"प्रीत्या नियुक्तान्लिहतीः स्तनन्धया-
न्निगृह्य पारीमुभयेन जानुनोः ।
वर्द्धिष्णुधाराध्वनि रोहिणीः पयः-
श्चिरं निदध्यौ दुहतः स गोदुहः ॥" )
तड़ित् । कटुम्भरा । (यथास्याः पर्य्यायः ।
"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
सोमवल्कः । (यथास्याः पर्य्यायो रत्नमालायाम् ।
"कट्फलः सोमवल्काख्यः सोमवृक्षश्च रोहिणी ॥"
महाश्वेता । तत्पर्य्यायो यथा,—
"कटभी किणिही श्वेता महाश्वेता च रोहिणी ॥"
इति वैद्यकरत्नमालायाम् ॥)
लोहिता । इति मेदिनी । णी, १७ ॥ जिनानां विद्यादेवीविशेषः । इति हेमचन्द्रः ॥ काश्मरी । हरीतकी । मञ्जिष्ठा । इति राजनिर्घण्टः ॥ कपिलवर्णा वर्त्तुलाकारा विरेचने प्रशस्ता हरी-तकी । इति राजवल्लभः ॥ * ॥ बलदेवमाता । सा वसुदेवभार्य्या कश्यपपत्नीसुरभ्यंशजाता । यथा,—
"देवकी रोहिणी चेमे वसुदेवस्य धीमतः ।
रोहिणी सुरभिर्देवी अदितिर्देवकी ह्यभूत् ॥"
इति महाभारते हरिवंशः ॥ * ॥
सुरभिकन्या । यथा,—
श्रीमार्कण्डेय उवाच ।
"दक्षस्य तनया याभूत् सुरभिर्नाम नामतः ।
गवां माता महाभागा सा सर्व्वलोकोपकारिणी ॥
तस्यास्तु तनया जज्ञे कश्यपात्तु प्रजापतेः ।
नाम्ना सा रोहिणी शुभ्रा सर्व्वकामदुघा नृणाम् ॥
तस्यां यज्ञे सुरभेनाह्नसीरिति तपोज्वलात् ।
कामधेनुरिति ख्याता सर्व्वलक्षणसंयुता ॥"
इति कालिकापुराणे शिवाध्यायः ॥ * ॥
नववर्षीया कन्या । यथा,—
"अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशमे कन्यका प्रोक्ता अत ऊर्द्ध्वं रजस्वला ॥"
इत्युद्वाहतत्त्वम् ॥ * ॥
( पञ्चवर्षा कुमारी । यथा, देवीभागवते । ३ । २६ । ४२ ।
"रोहिणी पञ्चवर्षा च षड्वर्षा कालिका स्मृता ॥"
रोगनाशायैवास्याः पूजा कर्त्तव्या । यथा, तत्रैव । ३ । २६ । ४८ ।
"रोहिणीं रोगनाशाय पूजयेद्विधिवन्नरः ॥"
अस्याः पूजामन्त्रो यथा, तत्रैव । ३ । २६ । ५६ ।
"रोहयन्ती च बीजानि प्राग्जन्मसञ्चितानि वै ।
या देवी सर्व्वभूतानां रोहिणीं पूजयाम्यहम् ॥"
हिरण्यकशिपुकन्या । यथा, महाभारते । १ । २२० । १८ ।
"कन्या सा रोहिणी नाम हिरण्यकशिपोः सुता ॥" * ॥
रोहिणि+पक्षे ङीष् । ) अश्विन्यादिसप्त-विंशतिनक्षत्रान्तर्गतचतुर्थनक्षत्रम् । तत्पर्य्यायः । रोहिणिः २ । इति शब्दरत्नावली ॥ ब्राह्मी ३ । इति हेमचन्द्रः ॥ ( यथा, महाभारते । ३ । १४६ । ११ ।
"अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥")
तत्तु शकटाकृति पञ्चताराात्मकम् । तस्याधि-

स्वामी देवता ब्रह्मा। गगनमध्ये उदिते सति सिंहलग्नस्य चतुर्विंशत्यधिकदशमितयं गतं भवति। यथा,—

“कम्बुकण्ठि ! शुक्रकालजनौ नभो-
मध्यमागतवति प्रजापतौ।
पञ्चमे गजकुम्भलिप्तिका
निःसृता: सुसखि ! सिंहलग्नत: ॥”

इति कालिदासकृतरात्रिलग्ननिरूपणम् ॥ * ॥
तत्र जातफलं यथा,—

“स्वाहकर्म्मकार्य्ये कुशल: कुलीन:
सुचारुदेहो विलसत्कलेवर: ।
स्वराभिमानाकुलिताखिलाशयो
यो रोहिणीज: स धनी स मानी ॥”

इति कोष्ठीप्रदीप: ॥ * ॥

गलरोगविशेष:। यथा। रोहिणीनामकगलरोगाणां नामानि संख्याश्चाह।

“रोहिणी पञ्चधा प्रोक्ता कण्ठशालूक एव च।
अधिजिह्वश्च वलयोऽलासनामैकवृन्दक: ॥
ततो वृन्द: शतघ्नी च गिलायु: कण्ठविद्रधि: ।
गलौघ: स्वरघ्नश्च मांसतानस्तथैव च ।
विदारी कण्ठदेशे तु रोगा अष्टादश स्मृता: ॥”

तत्र पञ्चानामपि रोहिणीनां सामान्यसंप्राप्तिमाह।

“गलेऽनिल: पित्तकफौ च मूर्च्छितौ
प्रदूष्य मांसञ्च तथैव शोणितम् ।
गलोपसंरोधकरैस्तथाङ्कुरै-
र्निहन्त्यसून् व्याधिरियं हि रोहिणी ॥”

अनिल: मूर्च्छित: प्रवृद्ध: कफपित्तौ च मूर्च्छितौ पित्तं वा मूर्च्छितं कफो वा मूर्च्छित:। ननु त्रयोऽपि मूर्च्छिता: पृथग्दोषजाया अविवक्षमाणत्वात्॥ तस्या वातजाया लक्षणमाह।

“जिह्वासमन्ताद्भृशवेदनास्तु
मांसाङ्कुरा: कण्ठविरोधना: स्यु: ।
सा रोहिणी वातकृता प्रदिष्टा
वातात्मकोपद्रवगाढयुक्ता ॥”

जिह्वासमन्तात् जिह्वाया: सर्व्वत:। वातात्मकोपद्रवगाढयुक्ता स्तम्भादिभिरतिशयेन युक्ता ॥”
पित्तजामाह।

“क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तजाता ॥”

श्लेष्मजामाह।

“स्रोतोनिरोधिन्यपि मन्दपाका
गुर्व्वी स्थिरा सा कफसम्भवा तु ॥”

स्रोतोऽत्र कण्ठस्रोत: ॥ * ॥ सन्निपातजामाह।

“गम्भीरपाकिन्यनिवार्य्यवीर्य्या
त्रिदोषलिङ्गा त्रिभवा भवेत् सा ॥”

रक्तजामाह।

“स्फोटैश्चिता पित्तसमानलिङ्गा
साध्या प्रदिष्टा रुधिरात्मिका तु ॥”

रक्तजेतरासां मारकत्वावधिमाह।
“सद्यस्त्रिदोषजा हन्ति त्र्यहात् कफसमुद्भवा।
पञ्चाहात् पित्तसम्भूता सप्ताहात् पवनोत्थिता ॥”

कण्ठशालूकमाह।

“कोलास्थिमात्र: कफसम्भवो यो
ग्रन्थिर्गले कण्टकशूकभूत: ।
खर: स्थिर: शस्त्रनिपातसाध्य-
स्तं कण्ठशालूकमिति ब्रुवन्ति ॥”

कण्टकशूकभूत: कण्टकवच्छूकवद्वेदनाजनक: ॥
अधिजिह्वामाह।

“जिह्वाग्ररूप: श्वयथु: कफात्तु
जिह्वोपरिष्टादसृजेव मिश्रात्।
ज्ञेयोऽधिजिह्व: खलु रोग एष
विवर्ज्जयेदागतपाकमेनम् ॥”

असृजा मिश्रादेवेत्यन्वय: ॥ * ॥ वलयमाह।

“बलाश एवायतमुन्नतञ्च
शोथं करोत्यन्नगतिं निवार्य्य ।
तं सर्व्वथैवाप्रतिवार्य्यवीर्य्यं
विवर्ज्जनीयं वलयं वदन्ति ॥”

अलासमाह।

“गले तु शोथं कुरुत: प्रवृद्धौ
श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिदं दुस्तरमेनमाहु-
रलाससंज्ञं भिषजो विकारम् ॥”

मर्म्मच्छिदं हृदयमर्म्मणि छेदेनेव वेदनाजनकम् ॥
एकवृन्दमाह।

“वृत्तोन्नतोऽन्त: श्वयथु: सदाह:
सकण्डुरोऽपाक्यमृदुर्गुरुश्च ।
नाम्नैकवृन्द: परिकीर्त्तितोऽसौ
व्याधिर्बलाश: क्षतजप्रसूत: ॥”

अन्त: गलमध्ये। अपाकी ईषत् पाकी। अमृदु: ईषन्मृदु: ॥ * ॥ वृन्दमाह।

“समुन्नतं वृत्तममन्ददाहं
तीव्रज्वरं वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपा-
द्विद्यात् सतोदं पवनात्मकन्तु ॥” * ॥

शतघ्नीमाह।

“वर्त्तिर्घना कण्ठविरोधिनी तु
चितातिमात्रं पिशितप्ररोहै: ।
अनेकरुक् प्राणहरी त्रिदोषा
ज्ञेया शतघ्नीसदृशी शतघ्नी ॥”

घना कठिना। अनेकरुक् वातपित्तकफजतोददाहकण्ड्वादियुक्ता। शतघ्नीसदृशी लोहकण्टकसंकुला शतघ्नी महती शिला। तत्तुल्या यत: प्राणहरी ॥ * ॥ गिलायुमाह।

“ग्रन्थिर्गले त्वामलकास्थिमात्र:
स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्ति: ।
संलक्ष्यते सक्तमिवाशितञ्च
स शस्त्रसाध्यस्तु गिलायुसंज्ञ: ॥”

गलविद्रधिमाह।

“सर्व्वं गलं व्याप्य समुत्थितो य:
शोफो रुज: सन्ति च यत्र सर्व्वा: ।
स सर्व्वदोषैर्गलविद्रधिस्तु
तस्यैव तुल्य: खलु सर्व्वजस्य ॥” * ॥

गलौघमाह।

“शोफो महान् यस्तु गलावरोधी
तीव्रज्वरो वायुगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन
गले गलौघ: परिकीर्त्तितोऽसौ ॥”

वायुगतेर्निहन्ता उदानवायुगतिरोधक: ॥ * ॥
स्वरघ्नमाह।

“यस्ताम्यमान: श्वसिति प्रसक्तं
भिन्नस्वर: शुष्कविमुक्तकण्ठ: ।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेय: स रोग: श्वसनात् स्वरघ्न: ॥”

ताम्यमान: तम: पश्यन्। शुष्कविमुक्तकण्ठ: शुष्को विमुक्तोऽस्वाधीन: कण्ठो यस्य स:। अस्वाधीनता भुक्तं गिलितुं अशक्यत्वात्। अनिलायनेषु वायुवर्त्मसु। श्वसनात् वातात् ॥ * ॥
मांसतानमाह।

“प्रतानवान् य: श्वयथु: सुकष्टो
गलोपरोधं कुरुते क्रमेण ।
स मांसतान: कथितोऽवलम्बी
प्राणप्रणुत् सर्व्वकृतो विकार: ॥”

प्रतानवान् विस्तारवान्। सुकष्ट: अतिशयितं कष्टं यत्र स: ॥ * ॥ विदारीमाह।

“सदाहतोदं श्वयथुं सुताम्र-
मन्तर्गले पूतिविशीर्णमांसम् ।
पित्तेन विद्याद्वदने विदारीं
पार्श्वे विशेषात् स तु येन शेते ॥”

पार्श्वे विशेषात् स तु येन शेते स पुरुषो येन पार्श्वेन विशेषाद्वाहुल्येन शेते तस्मिन् पार्श्वे सा विदारी भवति इत्यर्थ: ॥ * ॥ अथ गलरोगाणां चिकित्सा।

“रोहिणीनान्तु साध्यानां हितं शोणितमोक्षणम् ।
वमनं धूमपानञ्च गण्डूषो नस्यकर्म्म च ॥
वातजान्तु हृते रक्ते लवणै: प्रतिसारयेत् ।
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णश: ॥
विस्राव्य पित्तसंभूतां सिताक्षौद्रप्रियङ्गुभि: ।
घर्षयेत् कवलो द्राक्षापरूषै: कथितो हित: ॥
आगारधूमकटुकै: कफजां प्रतिसारयेत् ।

आगारधूम: झूल इति लोके। कटुकानि शुण्ठीपिप्पलीमरिचानि।

“श्वेताविडङ्गदन्तीषु तैलं सिद्धं ससैन्धवम् ।
नस्यकर्म्मणि दातव्यं कवलश्च कफोच्छ्रये ॥”

श्वेता अपराजिता।

“पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।
विस्राव्य कण्ठशालूकं साधयेत्तुण्डिकेरिवत् ॥
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पश: ।
उपजिह्वकवच्चापि साधयेदधिजिह्वकम् ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ।
एकवृन्दमिव प्रायो वृन्दञ्च समुपाचरेत् ॥
गिलायुञ्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ।
अमर्म्मस्थं सुपक्वं छेदयेद्गलविद्रधिम् ॥”

इति भावप्रकाश: ॥

( क्लीबे, त्रि । यथा, महाभारते ।२।६१।६३॥

"नैव कृशा न महती न ह्रस्वा नापि रोहिणी।
नीलकुञ्चितकेशी च तथा दीर्घाम्बरं यथा॥")

रोहिणीपति:, पुं, (रोहिण्या: पति:।) चन्द्र:। इति हेमचन्द्र:। २। १८॥ (यथा, देवीभागवते। १। ११। १८।
"इतीवं भाषमाणं तमुवाच रोहिणीपति:।
गुरुं क्रोधसमायुक्तं कान्ताविरहदु:खितम्॥"
वसुदेव:। वृषभश्च॥)

रोहिणीरमण:, पुं, (रोहिण्या रमण:।) वृषभ:। इति राजनिर्घण्ट:॥ वसुदेवश्च॥ (चन्द्र:। यथा, गीतगोविन्दे। ३। १०।
"वर्णितं जयदेवकेन हरेरिदं प्रवणेन।
केन्दुविल्वसमुद्रसम्भवरोहिणीरमणेन॥")

रोहिणीवल्लभ:, पुं, (रोहिण्या वल्लभ:।) चन्द्र:। इति हलायुध:॥ वसुदेवश्च॥

रोहिणीश:, पुं, (रोहिण्या ईश:।) चन्द्र:। इति हेमचन्द्र:॥ (यथा, माघे। ३। ६०।
"या रेवतीजानिरियेष हातुं
न रौहिणेयो न च रोहिणीश:॥")
वसुदेवश्च॥

रोहिण्यष्टमी, स्त्री, (रोहिणीयुक्ता अष्टमी।) रोहिणीनक्षत्रयुक्तभाद्रकृष्णाष्टमी। यथा,—
"कृष्णाष्टम्याञ्च रोहिण्यामर्द्धरात्रेऽर्च्चनं हरे:।
कार्य्यं विद्धापि सप्तम्या हन्ति पापं त्रिजन्म-
जम्॥
उपोषितोऽर्च्चयेन्मन्त्रैस्तिथिभान्ते च पारणम्॥
योगाय योगपतये योगेश्वराय योगसम्भवाय गोविन्दाय नमो नम:॥ स्नानमन्त्र:। यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमो नम:॥ अर्च्चनस्य। विश्वाय विश्वेश्वराय विश्वपतये विश्वसम्भवाय गोविन्दाय नमो नम:॥ शयनस्य। सर्व्वाय सर्व्वेश्वराय सर्व्वपतये सर्व्वसम्भवाय गोविन्दाय नमो नम:॥ पारणस्य।
स्थण्डिले पूजयेद्देवं सचन्द्रां रोहिणीं तथा।
शङ्खे तोयं समादाय सपुष्पफलचन्दनम्।
जानुभ्यामवनीं गत्वा चन्द्रायार्घ्यं निवेदयेत्॥
क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव।
गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम॥
श्रिये वसुदेवाय बलदेवाय नन्दाय यशोदायै।
अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्।
वासुदेवं हृषीकेशं नृसिंहं दैत्यसूदनम्॥
वाराहं पुण्डरीकाक्षं श्रीकान्तमजमव्ययम्।
दामोदरं पद्मनाभं केशवं गरुडध्वजम्॥
गोविन्दमच्युतं देवमनन्तमपराजितम्।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारकम्॥
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम्।
नारायणञ्चतुर्बाहुं शङ्खचक्रगदाधरम्॥
पीताम्बरधरं दिव्यं वनमालाविभूषितम्।
श्रीवत्साङ्कं जगद्धाम श्रीपतिं श्रीधरं हरिम्॥
यं देवं देवकी देवी वसुदेवादजीजनत्।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नम:।
नामान्येतानि संकीर्त्य नमस्कं प्रार्थयेत् पुन:॥
त्राहि मां सर्व्वपापघ्न दु:खशोकार्णवात् प्रभो।
देवकीनन्दन श्रीश हरे संसारसागरात्॥
दुर्वृत्तांस्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत्।
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसाग-
रात्॥
पुष्कराक्ष निमग्नोऽहं महत्यज्ञानसागरे।
त्राहि मां देवदेवेश त्वामृतेऽन्यो न रक्षिता॥
स्वजन्म वासुदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नम:॥
शान्तिरस्तु शिवञ्चास्तु धनविख्यातिराज्य-
भाक्॥"
इति गारुडे १३२ अध्याय:॥

रोहित्, पुं, (रोहतीति। रुह+"रुहरुहियुषिभ्य इति:।" उणा० १। ९९। इति इति:।) सूर्य्य:। इति मेदिनी। टे, १४०॥ वर्णभेद:। मत्स्यभेद:। इति संक्षिप्तसारोणादिवृत्ति:॥ (ऋष्यमृग:। यथा, वाजसनेयसंहितायाम्। "२४। ३०॥ "मनुष्यराजाय मर्कट: शार्द्दूलाय रोहित्।" "एको रोहित् ऋष्य: शार्द्दूलाय।" इति तद्भाष्ये महीधर:॥ रोहितवर्णविशिष्टे, त्रि। (यथा, ऋग्वेदे। १। १००। १६।
"रोहित् श्यावा सुमदंशुर्ललामी:।"
"रोहित् रोहितवर्णा श्यावा श्यामवर्णा।" इति तद्भाष्ये सायण:॥)

रोहित्, स्त्री, (रुह+"रुहरुहियुषिभ्य इति:।" उणा० १। ९९। इति इति:।) मृगी। ("ऋष्यस्य मृगस्य मृगी रोहिदुच्यते। तथाच महिम्न: स्तवे। गतं रोहिद्भूतां रिरमयिषु-मृष्यस्य वपुषा।" इत्युज्ज्वल:। १। ९९॥) लताभेद:। इति मेदिनी। टे, १४०॥ (वडवा। यथा, ऋग्वेदे। १। १४। १२।
"युक्ष्वा ह्यरुषी रथे हरितो देवा रोहित:॥"
"हे देवाग्ने रोहित: रोहिच्छब्दाभिधेयास्त्वदीया वडवा: रथे युक्ष्व युज योजय।" इति तद्भाष्ये सायण:॥*॥ रोहन्त्याभिर्बीजानि तज्जलेन हि बीजानि प्ररोहन्तीति तदर्थात्वम्। नदी। इति निघण्टु:। १। १३। १८॥ निगमेषु बहुवचनान्तत्वेन प्रायश: श्रवणात् बहुवचनान्तत्वम्॥)

रोहितं, क्ली, (रुह+"रुहे रश्च लो वा।" उणा० ३। ९४। इति इतन्।) कुङ्कुमम्। रक्तम्। ऋजुशक्रशरासनम्। इति मेदिनी। ते, १४५॥ (यथा, मनु:। १। ३८।
"विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च।
उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च॥")

रोहित:, पुं, (रोहतीति। रुह+"रुहे रश्च लो वा।" उणा० ३। ९४। इति इतन्।) मीनविशेष:। (यथाह कश्चित्।
"इन्दीवरो जितपीयूषो वाचा वाचामगोचर:।
रोहितो नो हित: प्रोक्तो मद्गुरो मद्गुरो:
प्रिय:॥")
रोहितमत्स्यस्य पर्य्याया गुणाश्च यथा,—
"झष: शल्की श्वेतकुक्षिस्तु मत्स्यो
य: स्थूलोऽसौ लोहितो रक्तपक्ष:।
कीर्त्यं तस्यं रोहितस्यापि मांसं
वातं हन्ति स्निग्धमग्र्याति वीर्य्यम्॥"
इति राजनिर्घण्ट:॥
अपि च।
"रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षति:।
लघुपक्षो भवस्मिग्धो रोहित: कथितो बुधै:॥
रोहित: सर्व्वमत्स्यानां वरो वृष्योऽर्द्दितार्त्तिजित्।
कषायानुरस: स्वादुर्व्वातघ्नो नातिपित्तकृत्॥
ऊर्द्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम्॥"
इति भावप्रकाश:॥
(तथाच।
"वातघ्नो नहि पित्तकृद्बलकर: स्याद्रोहित:
सर्व्वदा॥"
इति हारीते प्रथमस्थाने एकादशेऽध्याये॥
"शैवलाहारभोजित्वात् स्वप्नस्य च विवर्ज्जनात्।
रोहितो दीपनीयश्च लघुपाको महाबल:॥"
इति चरके सूत्रस्थाने सप्तविंशेऽध्याये॥
"कषायानुरसस्तेषां शष्पशैवालभोजन:।
रोहितो मारुतहरो नात्यर्थं पित्तकोपन:॥"
इति सुश्रुते सूत्रस्थाने ४६ अध्याये॥
स्वनामख्यातो हरिश्चन्द्रस्य नृपते: पुत्र:। यथा देवीभागवते। ७। १५। १५॥
"राजा पुत्रमुखं दृष्ट्वा सुखमाप महत्तरम्।
नामास्य रोहितश्चेति चकार विधिपूर्व्वकम्॥"
अस्य विवरणन्तु तत्रैव द्रष्टव्यम्॥) मृगभेद:। रोहितकवृक्ष:। इति मेदिनी। ते, १४६॥ (रोहीतोऽपि पाठ:। रोहीतकशब्ददर्शनात्॥ यथा, सुश्रुते। ६। १७।
"पलाशरोहीतमधूकजा रसा:
चाङ्गेर्य्या युक्ता मदिराग्निमिश्रिता:॥"
अग्निघोटक:। इति निघण्टु:। १। १५॥
"रोहन्ति आरोहन्ति रथं वहन्त्यादित्यमिति रोहित:।" इति तत्र देवराजयज्वा॥ यथा, ऋग्वेदे। १। ९४। १०।
"यदयुक्था अरुषा रोहिता रथे॥"
"रोहिता लोहितवर्णौ रोहित इत्यग्नेरश्वस्याख्या रोहितोऽग्नेरिति दर्शनात् रोहितनामकावश्वौ वक्तौ गमयत्विति मन्त्रवर्णाच्च।" इति तद्भाष्ये सायण:॥) रक्तवर्ण:। रक्तवर्णविशिष्टे, त्रि। इत्यमर:॥ (यथा, वाजसनेयसंहितायाम्। १६। १९।
"नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नम:॥")

रोहितक:, पुं, (रोहित एव। स्वार्थे कन्।) वृक्षविशेष:। रोहडा इति भाषा। तत्पर्य्याय:। रोही २ शोहगमु: ३ दाडिमपुष्पक: ४। इत्यमर:॥ रोहीतक: ५ रोहित: ६ रोहिण: ७ कूटशाल्मलि: ८ दाडिमपुष्प: ९ सदाप्रसून: १० कूटशाल्मलि: ११ विरोचन: १२ शाल्मलिक: १३। अस्य गुणा:। कटुत्वम्। स्निग्धत्वम्। कषायत्वम्। सुशीतलत्वम्। कृमिदोष-

श्वासश्लेष्मरक्तनेत्रामयापहश्च । इति राजनिर्घण्टः ॥ अपि च ।
"रोहितो लोहितो रोही लोही दाडिमपुष्पकः ।
रोहीतकः प्लीहघाती रुच्यो रक्तप्रसादनः ॥"
इति भावप्रकाशः ॥
अन्यच्च ।
"रोहीतको यकृत्प्लीहगुल्मोदरहरः स्मृतः ॥"
इति राजवल्लभः ॥
(गणविशेषः । यथा, महाभारते ।२।३२।२८।
"मरून् रोहितकांश्चैव आग्नेयान्मालवानपि ।
गणान् सर्व्वान् विनिर्जित्य नीतिकृत् प्रहसन्निव ।
शैरीषकान् महेत्थांश्च वशे चक्रे महाद्युतिः ॥")
रोहिता, स्त्री, (रोहित+टाप् । "वर्णादनुदात्तात्तोपधात्तो नः ।" ४ । १ । ३९ । इति पाणिनेर्ङीप् तकारस्य नकारादेशश्च न ।) रागादिना रक्तवर्णा । यथा,—
"रोहिणी रोहिता रक्ता लोहिनी लोहिता च सा ।"
इति जटाधरः ॥
रोहिताश्वः, पुं, (रोहितः अश्वो यस्य ।) अग्निः । इत्यमरः ॥ हरिश्चन्द्रराजपुत्त्रः । इति मेदिनी । वे, ६३ ॥
रोहितिका, स्त्री, (रोहितो वर्णोऽस्त्यस्या इति । रोहित+ठन् ।) रागादिना रक्तवर्णा । इति जटाधरः ॥
रोहितेयः, पुं, (रोहित एव । स्वार्थे ढः ।) रोहितवृक्षः । यथा,—
"प्लीहारी रोहितेयः स्यात् रक्तपुष्पश्च रोहितः ॥"
इति भरतधृतरत्नकोषः ॥
(विवरणमस्य रोहितकशब्दे ज्ञातव्यम् ॥)
रोही, [न्] पुं, (अवश्यं रोहतीति । रुह्+आवश्यके णिनिः ।) रोहितकवृक्षः । (अस्य पर्य्यायो यथा,—
"रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ॥"
इति वैद्यकरत्नमालायाम् ॥
"रोहीतको रोहितको रोही दाडिमपुष्पकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
अश्वत्थवृक्षः । वटवृक्षः । इति मेदिनी । ने, १२० ॥
रोहीतकः, पुं, (रोहीत एव । स्वार्थे कन् ।) रोहितकवृक्षः । इति राजनिर्घण्टः ॥ (यथा, बृहत्संहितायाम् । ५४ । ६८ ।
"रोहितकस्य पश्चादहिवासस्त्रिभिः करैर्याम्ये ॥"
तथास्य पर्य्यायः ।
"रोहीतको रोहितको रोही दाडिमपुष्पकः ।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
रौक्ष्यं, क्ली, (रूक्षस्य भावः । रूक्ष+ष्यञ् ।) रूक्षता । रूक्षस्य भाव इत्यर्थे ष्यञ्प्रत्ययेन निष्पन्नम् । तथा हि ।
"तैलं यद्रौक्ष्यदोषघ्नं तैलं यच्चार्द्रकं स्मृतम् ।
तेन त्वां स्नापयाम्यद्य जगन्मातरमम्बिकाम् ॥"
इति दुर्गापूजायां महाष्टमीमहास्नपनीयमन्त्रस्नानप्रकरणे देवीपुराणम् ॥ (तथा च ।
"ये रसा वातशमना भवन्ति यदि तेषु वै ।
रौक्ष्यलाघवशैत्यानि न ते हन्युः समीरणम् ॥"
इति सुश्रुते सूत्रस्थाने ४० अध्यायः ॥)
रौच्यः, पुं, (रुचेरपत्यमिति । रुचि+ष्यञ् ।) मनुविशेषः । यथा,—
"रौच्यादयस्तथान्येऽपि मनवः संप्रकीर्त्तिताः ।
रुचेः प्रजापतेः पुत्त्रो रौच्यो नाम भविष्यति ॥"
इति मात्स्ये ९ अध्यायः ॥
तन्मन्वन्तरे देवादयो यथा,—
"त्रयोदशस्य पर्य्याये ये रौच्यस्य मनोः सुराः ।
सप्तर्षींश्च नृपांश्चैव वदतो मे निशामय ॥
सुधर्म्माणः सुरास्तत्र सुकर्म्माणस्तथापरे ।
सुशर्म्माणस्तथा ह्येते समस्ता मुनिसत्तम ॥
महाबलो महावीर्य्यस्तेषामिन्द्रो दिवस्पतिः ।
भविष्यत्यथ सप्तर्षीन् गदतो मे निशामय ॥
धृतिमानव्ययश्चैव तत्त्वदर्शी निरुत्सुकः ।
निर्म्मोहः सुतपाश्चान्यो निष्प्रकम्पश्च सप्तमः ॥
चित्रसेनो विचित्रश्च नवक्षत्रिभयो दृढः ।
सुनेत्रः क्षत्रबुद्धिश्च सुरतश्चैव तत्सुताः ॥"
इति मार्कण्डेयपुराणम् ॥
अन्यद्विवरणं रुचिशब्दे द्रष्टव्यम् ॥ * ॥ बिल्वकाष्ठदण्डः । तत्पर्य्यायः । वैल्वः २ । इति हेमचन्द्रः ॥ (क्ली, रौच्यस्येदमिति । अण् । मन्वन्तरविशेषः । यथा, मार्कण्डेये । १०० । ३९ ।
"शान्तिश्रेष्ठो गुणैर्युक्तो दक्षसावर्णिके श्रुते ।
निशामयत्यखिलं रौच्यं श्रुत्वा नरोत्तमः ॥")
रौट, ऋ नादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) चतुर्दशस्वरी । ऋ, अररौटत् । नादरोऽनादरः । रौटति खलं लोकः । इति दुर्गादासः ॥
रौड, ऋ अनादरे । इति कविकल्पद्रुमः ॥ (भ्वा०-पर०-सक०-सेट् ।) ऋ, अररौडत् । इति दुर्गादासः ॥
रौद्रं, क्ली, (रुद्रस्येदम् । रुद्र+अण् ।) शृङ्गाराद्यष्टरसान्तर्गतविशेषरसः । तत्पर्य्यायः । उग्रम् २ । इत्यमरः ॥ रै क्रोधस्याश्रये । रुद्रो देवता यस्य रौद्रम् । यदाह भरतः ।
"शृङ्गारो विष्णुदेवः स्याद्धासः प्रमथदैवतः ।
करुणो यमदेवः स्याद्रौद्रो रुद्राधिदैवतः ॥" इति
रै क्रोधस्याश्रये । उग्यति क्रुधा समवैति उग्रः । उचिर् समवायने नाम्नीति रक् निपातनाच्चस्य गः । सर्व्वाभिभाविता रौद्रः । यथा, रावणचरितादि । एषु वीभत्सरौद्रे क्लीवे रूपभेदात् अन्ये पुंसि वीभत्सरौद्रौ चेति पुंलिङ्गपाठ इह युक्तः । इति भरतः ॥ * ॥ अपि च ।
अथ रौद्रः ।
"रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनं रिपुस्तत्र तच्चेष्टोद्दीपनं मतम् ॥
मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढा ॥
भ्रूविभङ्गौष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ।
अनुभावास्तथा क्षेपक्रूरसन्दर्शनादयः ॥
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।
मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारिणः ॥"
यथा,—
"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥"
अस्य युद्धवीराद्भेदमाह ।
"रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥"
इति साहित्यदर्पणे ३ परिच्छेदः ॥
रौद्रः, पुं, (रुद्रस्यायमिति । रुद्र+अण् ।) सूर्य्यतेजः । तत्पर्य्यायः । घर्म्मः २ । इति मेदिनी । रे, ८० ॥ प्रकाशः ३ द्योतः ४ आतपः ५ । इत्यमरः ॥ तस्य गुणाः ।
"आतपः कटुको रूक्षः स्वेदमूर्च्छातृषावहः ।
दाहवैवर्ण्यजननो नेत्ररोगप्रकोपणः ॥"
इति राजवल्लभः ॥ * ॥
सप्तरौद्रा यथा,—
"जठरः पिङ्गलो रौद्रो घोराख्यः कालसंज्ञितः ।
अग्निनामा ततो रौद्रः सप्त रौद्राः प्रकीर्त्तिताः ॥"
ग्रन्थान्तरे सप्तमो रौद्रः प्राणदाहः ॥ तेषां फलानि यथा,—
"पिङ्गलो रौद्रनामा च कालरूपः प्रजाक्षयम् ।
स्पर्शने वह्निरोगः स्यात् सर्व्वजीवसमुद्भवः ॥
जठरो रौद्रनामा च घोरधूम्रञ्च कारयेत् ।
व्रणादिपित्तरोगञ्च नानाक्लेशकरी नृणाम् ॥
अग्निर्नाम्ना यदा वर्षे रौद्रो भवति नान्यथा ।
उत्तापेन क्षितिं शुष्येत् नराणां रोगदो भवेत् ।
रौद्रनामा महारौद्रो यत्राब्दे च भवेद्ध्रुवम् ।
पित्तोद्वेगं भ्रमं कुर्य्यान्नानारोगसमन्वितम् ॥
घोरनामा महारौद्रो घोरधूम्रञ्च कारयेत् ।
उत्तापेन सदा दग्धं नानारोगसमन्वितम् ॥
कालनामा महारौद्र उत्तापि पीडनं सदा ।
नानारोगसमायुक्तं व्रणादिकक्षुकं भवेत् ॥"
इति ज्योतिषम् ॥
रसविशेषः । इति मेदिनी । रे, ८० ॥ तद्विवरणं क्लीवलिङ्गरौद्रशब्दे द्रष्टव्यम् । हेमन्तऋतुः । इति हेमचन्द्रः ॥ यमः । इति धरणिः ॥ (कार्त्तिकेयः । यथा, महाभारते । १ । १३८ । १३ ।
"आग्नेयः कृत्तिकापुत्त्रो रौद्रो गाङ्गेय इत्यपि ।
श्रूयते भगवान् देवः सर्व्वदेवमयो गुहः ॥")
रौद्रः, त्रि, (रुद्र+अण् ।) तीव्रः । (यथा, सन्निपातनिदानव्याख्याने विजयरक्षितेन हरिवंशोक्तज्वरवर्णनवचनमुक्तम् ।
"त्र्यक्षस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः ।
भस्मप्रहरणो रौद्रः कालान्तकसमोपमः ॥")

भीषणः । इति मेदिनी । रे, ८० ॥ (यथा, महाभारते । २ । ६४ । ५० ।
"तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणम् ।
प्रचक्रुर्बहुला पूजां कुरवस्तो धृतराष्ट्रजम् ॥")
रुद्रसम्बन्धिनि च ॥

रौद्री, स्त्री, (रौद्र+ङीप् ।) चण्डी । इति मेदिनी । रे, ८० ॥ रुद्रजटा । इति राजनिर्घण्टः ॥ रुरुदैत्यहन्तमहारौद्री माया महारौद्रीनाम्नी चामुण्डा च । यथा,—
"एक एव महादैत्यो रुरुस्तस्मौ महाम्बुधे ।
स च मायां महारौद्रीं रौरवीं विससर्ज्ज ह ॥
सा माया ववृधे भीमा सर्व्वदेवप्रमोहिनी ।
तया तु मोहिता देवाः सद्यो निद्रां तु भेजिरे ॥
देवी च त्रिशिखेनाशौ तं दैत्यं समताड़यत् ।
तया तु ताड़ितं तस्य दैत्यस्य शुभलोचने ।
चर्म्मसुण्डे उभे सम्यक् पृथग्भूते बभूवतुः ॥
रुरोस्तु दानवेन्द्रस्य चर्म्मसुण्डे जहारयत् ।
अपहृत्य हरेद्देवी चामुण्डा तेन साभवत् ॥
सर्व्वभूतमहारौद्री या देवी परमेश्वरी ।
संहारिणी तु या चैव कालरात्रिः प्रकीर्त्तिता ॥"
इति वाराहे त्रिशक्तिमाहात्म्यम् ॥

रौप्यं, क्ली, ( रूप्यमेव । अण् । ) रूप्यम् । इति राजनिर्घण्टः ॥ (यथा, माघे । ४ । ६७ ।
"दर्पणनिर्म्मलासु पतिते घनतिमिरमुषि
ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलति
मुहुः ॥")
तत्करणं यथा,—
"मध्वाज्यं गुड़ताम्रञ्च करेणा माक्षिकं रसम् ।
समभाग भवेद्रौप्यं सुवर्णकरणं स्मृतम् ॥"
इति गारुड़े १८८ अध्यायः ॥
( औषधादिषु अस्यालाभे यद्ग्राह्यं तद्यथा,—
"सुवर्णमथवा रौप्यं मृतं यत्र न लभ्यते ।
तत्र कान्तेन कर्म्माणि भिषक् कुर्य्यादिचक्षणः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
तन्निर्म्मिते, त्रि । यथा, भागवते । ४।२५।१४ ।
"स्वर्णरौप्यायसैः शृङ्गैः सङ्कुलां सर्व्वतो गृहैः ॥")

रौमं, क्ली, ( रुमायां लवणाकरे भवम् । रुमा + अण् । ) शाम्भरिलवणम् । इत्यमरटीकायां रामाश्रमः ॥

रौमकं, क्ली, शाम्भरिलवणम् । तत्पर्य्यायः । वसुकम् २ । इत्यमरः ॥ "रुमा नाम नदी लवणाकरः तत्र भवं रौमकम् । ठञे कादिति णः रौमं ततः स्वार्थे कः रौमकम् ।" इति तट्टीकायां भरतः ॥ ( पर्य्यायोऽस्य यथा,—
"शाकम्भरीयं कथितं गुड़ाख्यं रौमकन्तथा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )

रौमलवणं, क्ली, ( रौमं लवणमिति । ) शाम्भरिलवणम् । इति रत्नमाला ॥

रौरवः, पुं, (रुरवः प्राणिविशेषास्सन्त्यस्मिन्निति । रुरु + अण् । ) नरकविशेषः । घोरः । इति मेदिनी । वे, ४९ ॥ अस्य विवरणं यथा,—
"रौरवे कूटसाक्षी तु याति यश्चानृती नरः ।
तस्य स्वरूपं वदतो रौरवस्य निशामय ॥
योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः ।
जानुमात्रप्रमाणन्तु तत्र श्वभ्रं सुदुस्तरम् ॥
तत्राङ्गारचयो येन कृतं तद्धरणीसमम् ।
आज्वल्यतातितीव्रेण तापिताङ्गारभूमिना ॥
तन्मध्ये पापकर्म्माणां विमुञ्चन्ति यमानुगाः ।
स दह्यमानस्तीव्रेण वह्निना तेन धावति ॥
पदे पदे च पादोऽस्य शीर्य्यते जायते पुनः ।
अहोरात्रेणोद्धरणं पादन्यासं स गच्छति ।
एवं सहस्रं विस्तीर्णं योजनानां विमुच्यते ॥"
इति मार्कण्डेयपुराणे पितापुत्त्रसंवादनामाध्यायः ॥ (तथाच देवीभागवते ।८।२२।८-११।
"एतन्ममाहमिति यो भूतद्रोहेण केवलम् ।
पुष्णाति प्रत्यहं स्वीयकुटुम्बं कार्य्यलम्पटः ॥
एतद्विहाय चात्रैव स्वाशुभेन पतेदिह ।
रौरवे नाम नरके सर्व्वसत्त्वभयावहे ॥
इह लोकेऽमुना ये तु हिंसिता जन्तवः पुरा ।
त एव रुरवो भूत्वा परत्र पीड़यन्ति तम् ॥
तस्माद्रौरवमित्याहुः पुराणज्ञा मनीषिणः ।
रुरुः सर्पादपि क्रूरो जन्तुरुक्तः पुरातनैः ॥")

रौरवः, त्रि, चञ्चलः । धूर्त्तः । घोरः । इति शब्दरत्नावली ॥ ( रुरोर्मृगस्येदमिति । अण् । मृगसम्बन्धिनि च । यथा, मनुः । २ । ४१ ।
"कार्ष्णरौरववास्तानि चर्म्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्व्येण शाणक्षौमाविकानि च ॥")

रौहिट्, [ष्] पुं, रौहिषमृगः । यथा । "स एष रौहिषां मध्ये चरतीति भवभूतिः ।" इत्यमरटीकायां भरतः ॥

रौहिणं, क्ली, ( रोहिणमेव । स्वार्थे अण् । ) दिनस्य नवममुहूर्त्तः । यथा । अत्र पूर्व्वाह्ने श्राद्धमभिधाय रौहिणन्तु न लङ्घयेदित्यभिधानेन पूर्व्वाह्नश्राद्धस्य सम्भवात् परो रौहिणपर्य्यन्तगौणपूर्व्वाह्नकालः प्रतीयते । तेन रौहिणं पूर्व्वाह्नश्राद्धस्य गौणकालत्वेनोत्तरावधिः अपराह्नश्राद्धस्य पूर्व्वावधिरित्यवगम्यते ततश्च पूर्व्वदिने सम्भवात् परं रौहिणपर्य्यन्तं तिथेर्लाभे परदिने मुहूर्त्तत्रयमात्रे तत्तिथिलाभे पूर्व्वदिने श्राद्धम् । रौहिणान्तरूपगौणपूर्व्वाह्नलाभात् न परदिने तथात्वाभावात् । उभयदिने सम्भवलाभे परदिने शुक्लपक्षे तिथिर्ग्राह्या इति वचनात् । रौहिणन्तु दिवसस्य नवममुहूर्त्तस्य ज्योतिषोक्तरोहिणीदैवतत्वात् रौहिणत्वमिति । इति श्राद्धतत्त्वम् ॥

रौहिणः, पुं, ( रुह्+इनन् । स्वार्थे अण् । ) चन्दनवृक्षः । इति त्रिकाण्डशेषः ॥

रौहिणेयं, क्ली, मरकतमणिः । इति राजनिर्घण्टः ॥

रौहिणेयः, पुं, (रोहिण्या अपत्यमिति । रोहिणी + "शुभ्रादिभ्यश्च ।" ४।१।१२३ । इति ढक् । ) बलदेवः । (यथा, महाभारते । १।१९२।१९ ।
"तत्रोपविष्टं पृथुदीर्घबाहुं
ददर्श कृष्णः सहरौहिणेयः ॥")
बुधग्रहः । इत्यमरः ॥ (पुरुषोत्तमक्षेत्रीयपञ्चकाव्यतमः । यथा, तीर्थतत्त्वे ।
"मार्कण्डेये वटे कृष्णे रौहिणेये महोदधौ ।
इन्द्रद्युम्नसरः स्नात्वा पुनर्जन्म न विद्यते ॥")

रौहिणेयः, त्रि, (रोहिण्या अपत्यमिति । रोहिणी + ढक् ।) गोवत्सः । इति मेदिनी । ये, १२७ ॥

रौहिषं, क्ली, (रोहतीति । रुह् + "रुहेर्वृद्धिश्च ।" उणा० १।४८ । इति टिषच् । रुहिच धातोः ।) कत्तृणम् । इत्यमरः ॥ रोहिषतृणम् । इति राजनिर्घण्टः ॥ तन्नामगुणाः ।
"कत्तृणं रौहिषं देवजग्धं सौगन्धिकं तथा ।
भूतीकं ध्याम पौरञ्च श्यामकं धूमगन्धिकम् ॥
रौहिष तुवरं तिक्तं कटुपाकं व्यपोहति ।
हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान् ॥"
इति भावप्रकाशः ॥ * ॥
अन्यत् कत्तृणशब्दे द्रष्टव्यम् ॥

रौहिषः, पुं, ( रुह्+टिषच् । रुहिच धातोः । ) मृगविशेषः । इत्यमरः ॥ रोहितमत्स्यः । इति जयपालः ॥

रौहिषी, स्त्री, ( रौहिष+ङीप् । ) मृगी । दूर्व्वा । इति संक्षिप्तसारोणादिवृत्तिः ॥

---

# ल

ल, लकारः । स तु यवर्गस्य तृतीयो वर्णो अन्तस्थाद्वितीयवर्णश्च । अस्योच्चारणस्थानं दन्ताः । इति व्याकरणम् ॥ (तथाच सिद्धान्तकौमुद्याम् ।
"लृतुलसानां दन्ताः ॥") तस्य स्वरूपं यथा,—
"लकारं चञ्चलापाङ्गि । कुण्डलीत्रयसंयुतम् ।
पीतविद्युल्लताकारं सर्व्वरत्नप्रदायकम् ॥
पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा ।
त्रिशक्तिसहितं वर्णं त्रिबिन्दुसहितं सदा ।
आत्मादितत्त्वसहितं हृदि भावय पार्व्वति ! ॥"
इति कामधेनुतन्त्रम् ॥ * ॥
( वर्णोद्धारमालायाम् । ) अस्य लेखनप्रकारो यथा,—
"कुण्डलीत्रयसंयुक्ता वामाद्दक्षगता त्वधः ।
पुनरूर्द्ध्वगता रेखा तासु नारायणः शिवः ।
ब्रह्मशक्तिश्च सन्तिष्ठत्यासमस्य प्रचक्षते ॥"
ध्यानं यथा,—
"चतुर्भुजां पीतवस्त्रां रक्तपङ्कजलोचनाम् ।
सर्व्वदा वरदां भीमां सर्व्वालङ्कारभूषिताम् ॥
योगीन्द्रसेवितां नित्यां योगिनीं योगरूपिणीम् ।
चतुर्वर्गप्रदां देवीं नागहारोपशोभिताम् ॥
एवं ध्यात्वा लकारन्तु तन्मन्त्रं दशधा जपेत् ॥"
इति वर्णोद्धारतन्त्रम् ॥
तस्य नामानि यथा,—
"लवणः पूतना पृथ्वी माधवः शक्रवाचकः ।
बलानुजः पिनाकीशो व्यापको मांससंज्ञकः ॥

लक्ष्मी माधोऽमृतं देवी बलयं बालकोपतिः। शिखा वाणी क्रिया माता भामिनी कामिनी प्रिया॥
ज्वालिनी वेगिनी नादः प्रद्युम्नः श्रीधरो हरिः। विश्वात्मा मत्तो बली पीतो मेरुगिरिः कला रसः॥"
इति नानातन्त्रशास्त्रम्।

( अनुबन्धविशेषः। यथा, कविकल्पद्रुमे। "दिवाद्यो घुटादिकः।" एतेन अद् लौ भवति लुगद्भ्योऽपः। अस्ति इति॥ छन्दःशास्त्रोक्तो लघुसंज्ञको गणविशेषः। इति छन्दोमञ्जरी॥)

लं, क्ली, ( लीयतेऽत्रेति। ली + अभिधानात् अच्-प्रत्ययेऽपि डः।) पृथ्वीबीजम्। इति तन्त्रम्॥

लः, पुं, ( लातीति। ला + अच्।) इन्द्रः। इति मेदिनी। ले, १॥

लक, क स्वादे आपने। इति कविकल्पद्रुमः॥ ( चुरा०-पर०-सक०-सेट्।) स्वादो रसोपादानम्। क, लाकयति मोदकं बालकः। इति दुर्गादासः॥

लकचः, पुं, लकुचवृक्षः। इति शब्दरत्नावली॥

लकुचः, पुं, ( लकयते इति। लक स्वादे + बाहुलकात् उचः।) वृक्षविशेषः। डेहुया इति मादार इति च भाषा। तत्पर्य्यायः। लिकुचः २ शालः ३ कषायी ४ दृढवल्कलः ५ डहुः ६ कार्श्यः ७ शूरः ८ स्थूलस्कन्धः ९। अस्य गुणाः। तिक्तत्वम्। कषायत्वम्। उष्णत्वम्। लघुत्वम्। कण्ठदोषहरत्वम्। दाहित्वम्। मलसंग्रहदायकत्वञ्च। इति राजनिर्घण्टः॥ * ॥ अपि च।
"लकुचः क्षुद्रपनसो लिकुचो डहुरित्यपि। आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा॥
मधुरञ्च तथाम्लञ्च दोषत्रितयरक्तकृत्। शुक्राग्निनाशनञ्चापि नेत्रयोरहितं स्मृतम्॥
सुपक्वं तत्तु मधुरमम्लं चानिलपित्तकृत्। कफवह्निकरं रुच्यं वृष्यं विष्टम्भकञ्च तत्॥"
इति भावप्रकाशः॥ * ॥
अन्यच्च।
"लकुचं गुरु विष्टम्भि स्वाद्वम्लं रक्तपित्तकम्। श्लेष्मकारि समीरघ्नमुष्णं शुक्राग्निनाशनम्॥"
इति वैद्यकम्॥

लक्तकः, पुं, ( रक्तेन रक्तवर्णेन कायतीति। कै + कः। रस्य लत्वम्।) अलक्तकः। इति शब्दरत्नावली॥ (यथा, गो० रामायणे।२।६०।२६।
"प्रलक्ष्या लक्तकरसप्रख्यौ तमसवर्ज्जितौ। तथैव रेणुत्रस्ताचरणौ पद्मवर्चसौ॥")
जीर्णवस्त्रखण्डम्। नेकड़ा इति भाषा। तत्पर्य्यायः। कर्पटः २। इत्यमरः॥ नक्तकः ३। इति भरतः॥ * मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे नेकड़ा इति ख्याति। लक्तकाद्यष्टकं वक्ष्यमाणे इति केचित्॥ पटोऽस्त्री कर्पटः शाटः चिपटप्रोतलक्तकाः। इति रभसः॥ लक्ष्यते हीनेदशायामनुभूयते लक्तः रक लक क स्वादे आपने चुर्थ्यो निर्म्मेति विभाषितत्वात् न ञिः कर्म्मणि क्तः ततः स्वार्थे कः लक्तकोऽन्तःस्यादिः। अज्यते स्म अक्तं अक्तं अनुजोः क्तः न अक्तं कं सुखं यस्मादिति त्रिपदबहुव्रीहौ मनीषादित्वात् अक्तस्य पूर्व्वलोपे नक्तकस्तवर्गपञ्चमादिरपि। इति तट्टीकायां भरतः॥

लक्तकर्म्मा, [न्] पुं, ( लक्तं रक्तवर्णं करोतीति। ल + मनिन्।) रक्तवर्णलोध्रः। इति शब्दचन्द्रिका॥

लक्ष, क ञ दर्शने। अङ्के। इति कविकल्पद्रुमः॥ ( चुरा०-उभ०-सक०-सेट्।) क ञ, लक्षयति लक्षयते घटं लोकः। पश्यति चिह्नयुक्तं करोतीत्यर्थो वा। इति दुर्गादासः॥

लक्षं, क्ली, (लक्षयतीति। लक्ष + अच्।) व्याजः। शरव्यम्। इति मेदिनी। षे, २३॥ ( यथा, मनुः। ७। ५४।
"मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्गतान्। सचिवान् सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षितान्॥")

लक्षं, स्त्री, क्ली, ( लक्षयतीति। लक्ष + अच्।) दशायुतसंख्या। इति मेदिनी। षे, २३॥ लाख इति भाषा। (यथा, कथासरित्सागरे।४३।१०८।
"तल्लोकादशभिर्मित्रैः सहायातेऽस्य हि। लक्षमभ्यधिकं देव वर्त्तते वरवाजिनाम्॥")

लक्षकं, क्ली, ( लक्षयतीति। लक्ष + ण्वुल्।) लक्षयति यत्। यथा। लक्षकं नाम लक्षयति।
"याहशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत्। तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि॥"
याहशार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव ताहशार्थे लक्षकं यदि ताहशार्थे शक्तिशून्यं भवेत्। सैन्धवादयस्तु शब्दाः तुरगादिसम्बन्धिनि लवणादाविव तुरगाद्वावपि शक्ता एव। गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धितीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्ति तत्र लक्षका एव। अपि च। तदेव विधलक्षणावत्त्वाल्लक्षकं नामापि जहत्स्वार्थादिभेदादनेकविधमित्यर्थः स्यादेतद्यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेत्तुस्तदोक्तक्रमेण लक्षकाणां विभागो न सिध्यति। तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणामननुभावकत्वात् गुरूणाममी शेषं सुप्तेदित्यादौ शक्येन दहनादिनेव गङ्गायां घोष इत्यादौ लक्षितेन तीरादिना साकं गृहीतासंसर्गकस्यैव समन्वयार्थाधियत्वान्वयबोधप्रविष्टत्वादिति चेन्न। प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्मान्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीराद्यविशेषितस्य सुबर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात्। न च शक्तस्यैव पदस्य स्वाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्म्मिकान्वयबोधं प्रति हेतुत्वादन्वयबुद्धौ लक्षार्थस्य प्रवेशः। शक्ताः प्रविशन्तीत्यादौ लक्ष्यस्य कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः। कुमतिः पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यनुभविकत्वाच्च। तस्मात् शक्तेरिव भक्तेरपि ज्ञानमनुभावकं भवत्येव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः। इति शब्दशक्तिप्रकाशिका॥

लक्षणं, क्ली, ( लक्ष्यतेऽनेनेति। लक्ष + ल्युट्। यद्वा, "लक्षेरट् च।" उणा० ३। ७। इति नप्रत्ययस्तस्याट्टागमश्च।) चिह्नम्। ( यथा, रघुः। १०। ६।
"अथाधिपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम्॥")
नाम। इति मेदिनी। णे, ७५॥ लक्ष्यते ज्ञायतेऽनेनेति लक्षणम्। तद्द्विविधम्। इतरभेदानुमापकम्। व्यवहारप्रयोजकञ्च। इति न्यायमतम्॥ व्याकरणमते तु।
"तत्तद्धितसमासानामभिधानं नियामकम्। लक्षणन्त्वनभिज्ञानां तदभिज्ञानसूचकम्॥"
इति बोपदेवः॥
( लक्षणलक्षणन्तु। "समानासमानजातीयो व्यवच्छेदो लक्षणार्थः।" इति सांख्यतत्त्वकौमुद्याम्।५। सुखदुःखलक्षणं यथा, मनौ।४।१६०।
"सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम्। एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥")
दर्शनम्। इति लक्षधात्वर्थदर्शनात्॥

लक्षणः, पुं, (लक्ष + "लक्षेरट् च।" उणा० ३।७। इति नस्तस्याट्टागमश्च। लक्षणमस्यास्तीति अच् वा।) सौमित्रिः। यथा, हरिवंशे। ४१। १२८।
"लक्षणानुगतो यत्र सर्व्वभूतहिते रतः। चतुर्दश वने तप्त्वा तपो वर्षाणि राघवः॥")
सारसपक्षी। इति शब्दरत्नावली॥

लक्षणा, स्त्री, ( लक्षण + टाप्।) सारसी। इति मेदिनी। णे, ७५॥ हंसी। इति सिद्धान्तकौमुद्यामुणादिवृत्तिः॥ (अप्सरोविशेषः। यथा, महाभारते। १। १२३। ५९।
"अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा॥")
शक्यसम्बन्धः। यथा,—
"लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः॥"
इति भाषापरिच्छेदः॥
गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्य्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते तत्र लक्षणया तीरस्य बोधः। सा च शक्यसम्बन्धरूपा। तथा हि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं ततः शाब्दबोधः। इति सिद्धान्तमुक्तावली॥ * ॥ अपि च।
"जहत्स्वार्थाजहत्स्वार्था निरूढ़ाधुनिकादिकाः। लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा॥"
काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते। यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यतावच्छेदकीभवत्तिना शक्य-

शक्तिरेव वा स्वपेक्षासम्बन्धादनन्तशाखार्था। यथा शब्दत्वादिना गौत्वघटत्वादिना च घटादिपदस्य। कश्चिच्छक्यतावच्छेदकीभूततद्रूपेण पूर्व्वपूर्व्वं शक्यावच्छेदकामित्युक्ता। यथा, आरम्भादिप्रकारेण तदाश्रयस्वानुभावकत्वादश्वादिपदस्य। काचिच्च पूर्व्वपूर्व्वं तादृश्येन प्रत्यायकत्वादाधुनिकी। यथा घटत्वादिना घटादिपदस्य। आदिना शब्दशक्यत्वप्रकारेण बोधकतया गौणीत्युपपद्यते। यथा अग्निर्माणवक इत्यादावग्निशब्दत्वादिना अग्न्यादिपदस्य। इति शब्दशक्तिप्रकाशिका ॥ * ॥

अन्यच्च।

"मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते।
रूढ़ेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पिता।" १॥

कलिङ्गः साहसिक इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थे असम्भवन् यया शब्दस्य शक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति। यथा च गङ्गायां घोष इत्यादौ गङ्गादिशब्दो जलमयाद्यर्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति। सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्व्वत्र हेतू रूढ़िः प्रसिद्धिरेव। उत्तरत्र गङ्गातटे घोष इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम्। हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादत उक्तं रूढ़िः प्रयोजनाद्वेति ॥ * ॥

तद्भेदानाह।

"मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा।" २॥

रूढ़ावुपादानलक्षणा यथा। श्वेतो धावति। प्रयोजने यथा। कुन्ताः प्रविशन्ति। अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्तृतयान्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्च आक्षिप्यन्ते। पूर्व्वत्र प्रयोजनाभावाद्रूढ़िः। उत्तरत्र कुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम्। लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः। इयमेवाजहत्स्वार्थेत्युच्यते ॥ * ॥

"अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषा लक्षणलक्षणा।" ३॥

रूढ़िप्रयोजनयोर्लक्षणलक्षणा यथा। कलिङ्गः साहसिकः गङ्गायां घोष इति च। अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः। यथा वा।

"उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम्।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततः शरदां शतम्।"

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दाः आत्मानमर्पयन्ति। अपकारिणं प्रति उपकारादिप्रतिपादनान्मुख्यार्थबाधः वैपरीत्यलक्षणः सम्बन्धः फलमपकारातिशयः। इयमेव जहत्स्वार्थेत्युच्यते ॥ * ॥

"आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा।"

ताः पूर्व्वोक्ताश्चतुर्भेदा लक्षणाः।

"विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत्।
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका।" ४॥

रूढ़ावुपादानलक्षणा सारोपा यथा। अश्वः श्वेतो धावति अत्र हि श्वेतगुणवान् अश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते। प्रयोजने यथा एते कुन्ताः प्रविशन्ति अत्र सर्व्वनाम्ना कुन्तधारिपुरुषनिर्द्देशात् सारोपात्वम्। रूढ़ौ लक्षणलक्षणा यथा। कलिङ्गः पुरुषो युध्यति। अत्र पुरुषकलिङ्गयोराधाराधेयभावसम्बन्धः। प्रयोजने यथा आयुर्घृतम्। अत्रायुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं प्रयोजनम्। यथा च राजकीये पुरुषे गच्छति राजासौ गच्छति इत्यत्र स्वस्वामिभावलक्षणः सम्बन्धः। यथा वा अग्रमात्रेऽवयवे हस्तोऽयम्। अत्रावयवावयविभावलक्षणः सम्बन्धः। ब्राह्मणेऽपि तक्षासौ अत्र तात्कर्म्यलक्षणः सम्बन्धः। इन्द्रार्थासु स्थूणासु अमी इन्द्राः अत्र तादर्थ्यरूपः। एवमन्यत्रापि। निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्याश्चतुर्षु भेदेषु पूर्व्वोदाहरणान्येव ॥ * ॥

"सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि।
सादृश्यात्तु मता गौण्यस्तेन षोड़श भेदिताः।" ५॥

ताः पूर्व्वोक्ता अष्टभेदा लक्षणाः सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः। अत्र शुद्धानां पूर्व्वोदाहरणान्येव। रूढ़ावुपादानलक्षणा सारोपा गौणी यथा। एतानि तैलानि हेमन्ते सुखानि अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते। प्रयोजने यथा राजकुमारेषु तत्सदृशेषु च गच्छत्सु एते राजकुमारा गच्छन्ति। रूढ़ावुपादानलक्षणा साध्यवसाना गौणी यथा तैलानि हेमन्ते सुखानि। प्रयोजने यथा राजकुमारा गच्छन्ति। रूढ़ौ लक्षणलक्षणा सारोपा गौणी यथा राजा गौड़ेन्द्रः कण्टकं शोधयति। प्रयोजने गौर्व्वाहीकः। रूढ़ौ लक्षणलक्षणा साध्यवसाना गौणी यथा कण्टकं शोधयति। प्रयोजने यथा गौर्ज्जल्पति ॥ * ॥

"व्यङ्गस्य गूढ़ागूढ़त्वाद्द्विधा स्युः फललक्षणाः।" ६॥

प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजनरूपव्यङ्गस्य गूढ़ागूढ़तया प्रत्येकं द्विधा भूत्वा षोड़शभेदाः। तत्र गूढ़ः काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः। यथा उपकृतं बहु तत्रेत्यादि। अगूढ़ोऽतिस्फुटतया सर्व्वजनवेद्यः। यथा उपदिशति कामिनीनां यौवनमद एव ललितानि। अत्रोपदिशतीत्यनेन आविष्करोतीति लक्ष्यते आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते ॥ * ॥

"धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि द्विधा।" ७॥

एता अनन्तरोक्ताः षोड़शभेदा लक्षणाः फलस्य धर्म्मगतत्वेन धर्म्मिगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः। क्रमेणोदाहरति।

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढ़ं कठोरहृदयो रामोऽस्मि सर्व्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि! धीरा भव।"

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि लक्ष्ये तस्यैवातिशयः फलम्। गङ्गायां घोष इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्म्मस्यातिशयः फलम् ॥ * ॥

"तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः।"

रूढ़ावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणाभेदाः ॥ * ॥ किञ्च।

"पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा।" ८।

ता अनन्तरोक्ताः। अत्र पदगतत्वेन यथा गङ्गायां घोषः। वाक्यगतत्वेन यथा उपकृतं बहु तत्रेति। एवमशीतिप्रकारा लक्षणा। इति साहित्यदर्पणम् ॥

लक्षा, स्त्री, (लक्षयतीति। लक्ष + अच्। टाप्।) लक्षम्। दशायुतसंख्या। इति मेदिनी। षे, २६ ॥

लक्षितः, त्रि, (लक्ष + क्तः।) आलोचितः। दृष्टः। (यथा, रघुः। ७। ४४।

"यैः सादिता लक्षितपूर्व्वकेतून्
तानेव सामर्षतया निजघ्नुः।")

अङ्कितः। इति लक्षधातोः कर्म्मणि क्तप्रत्ययेन निष्पन्नम्। लक्षणान्वयश्च।

लक्षितलक्षणा, स्त्री, लक्षिते लक्षणा। यथा द्विरेफपदेन बहुव्रीहिलक्षणयोपस्थापितात् द्विरेफयुक्तभ्रमरपदादभिधयैव भ्रमरोपस्थितिः। अत्र रूढ़िरस्ति। प्रकृते तु रूढ़िप्रयोजनाभावान्नैयायिकैः इयमेव लक्षितलक्षणेत्युच्यते। न च लक्षणाद्वयाभावात् कथमियं लक्षितलक्षणेति वाच्यम्। यत्र लक्षितात् शब्दादर्थाभिधानं तत्रैव लक्षितलक्षणायाः परिभाषितत्वात्। इति साहित्यदर्पणटीकाकृत् श्रीरामचरणतर्कवागीशः ॥

ललिता, स्त्री, (लक्ष + क्तः। स्त्रियां टाप्।) परकीयान्तर्गतनायिकाभेदः। अस्या लक्षणम्।

खड्गी नादोऽक्षतं देवी लवणं वाचकीपतिः ।
शिखा वायी क्रिया माता भामिनी कामिनी
प्रिया ॥
ज्वालिनी वेगिनी नादः प्रद्युम्नः शोषणो हरिः ।
विश्वात्ममन्त्री वली चेतो मेरुगिरिः कला रसः ॥”
इति नानातन्त्रशास्त्रम् ।
( अनुबन्धविशेषः । यथा, कविकल्पद्रुमे ।
“दिवाद्यो ग्रादादिकः ।” एतेन श्यद् लौ
भच्यामिशुगाद्भ्योऽपः । अस्ति इति ॥ छन्दः-
शास्त्रोक्तो लघुसंज्ञको गणविशेषः । इति
छन्दोमञ्जरी ॥ )

**लं,** क्ली, ( लीयतेऽत्रेति । ली + अभिधानान्नियप-
परेऽपि डः । ) एर्व्वालीचम् । इति तन्त्रम् ॥

**लः,** पुं, ( लातीति । ला + अच् । ) इन्द्रः । इति
मेदिनी । ले, १ ॥

**लक,** क स्वादे आपने । इति कविकल्पद्रुमः ॥
( चुरा०-पर०-सक०-सेट् । ) स्वादो रसो-
पादानम् । क, लाकयति मोदकं बालकः ।
इति दुर्गादासः ॥

**लकचः,** पुं, लकुचवृक्षः । इति शब्दरत्नावली ॥

**लकुचः,** पुं, ( लक्यते इति । लक स्वादे + बाहु-
लकादुचः । ) वृक्षविशेषः । डेहुया इति
मादार इति च भाषा । तत्पर्य्यायः । लिकुचः २
शालः ३ कषायी ४ दृढवल्कलः ५ डहुः ६
काशी ७ सूरः ८ स्थूलस्कन्धः ९ । अस्य गुणाः ।
तिक्तरसत्वम् । कषायत्वम् । उष्णत्वम् । लघु-
त्वम् । कण्ठदोषहरत्वम् । दाहित्वम् । मल-
संग्रहदायकत्वञ्च । इति राजनिर्घण्टः ॥ * ॥
अपि च ।
“लकुचः स्वप्यनसो लिकुचो डहुरित्यपि ।
आमं लकुचमुष्णञ्च गुरु विष्टम्भकृत्तथा ॥
मधुरञ्च तथाम्लञ्च दोषत्रितयरक्तकृत् ।
शुक्राग्निनाशनञ्चापि नेत्रयोरहितं स्मृतम् ॥
सुपक्वं तत्तु मधुरमम्लं चानिलपित्तकृत् ।
कफवह्निकरं रुच्यं हृद्यं विष्टम्भकञ्च तत् ॥”
इति भावप्रकाशः ॥ * ॥
अन्यच्च ।
“लकुचं गुरु विष्टम्भि स्वादम्लं रक्तपित्तकम् ।
श्लेष्मकारि समीरघ्नमुष्णं शुक्राग्निनाशनम् ॥”
इति वैद्यकम् ॥

**लक्तकः,** पुं, ( रक्तेन रक्तवर्णेन कायतीति । कै +
कः । रस्य लत्वम् । ) अलक्तकः । इति शब्द-
रत्नावली ॥ (यथा, गो० रामायणे ।२।६०।२६।
“प्रत्यग्रा लक्तकरसप्रख्यौ तम्रसवर्ज्जितौ ।
सद्येव रेजतुस्तस्याश्चरणौ पद्मवर्च्चसौ ॥”)
जीर्णवस्त्रखण्डम् । नेकड़ा इति भाषा । तत्-
पर्य्यायः । कर्पटः २ । इत्यमरः ॥ नक्तकः ३ ।
इति भरतः ॥ हे मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे
नेकड़ो इति ख्याते । लक्तकाद्यष्टकं वस्त्रमात्रे
इति केचित् ॥ पटोऽस्त्री कर्पटः शाटः सिचय-
श्चेलनक्तकाः । इति रभसः ॥ लक्यते श्रीने-
राखाद्यते अनुभूयते लक्तः रक लक क स्वादे

आपने चुर्भ्यो णिज्वेति विभाषितत्वात् न णिः
कर्म्मणि क्तः ततः स्वार्थे कः लक्तकोऽन्तःस्थादिः ।
अज्यते स्म व्यक्तं व्यक्तं अनूलोः क्तः न व्यक्तं कं
सुखं यस्मादिति त्रिपदबहुव्रीहौ मनीषादित्वात्
व्यक्तस्य पूर्व्वलोपे नक्तकस्तवर्गपञ्चमादिरपि ।
इति तट्टीकायां भरतः ॥

**लक्तकर्म्मा,** [न्] पुं, ( लक्तं रक्तवर्णं करोतीति ।
कृ + मनिन् । ) रक्तवर्णलोध्रः । इति शब्द-
चन्द्रिका ॥

**लक्ष,** क ञ दर्शने । अङ्के । इति कविकल्पद्रुमः ॥
( चुरा०-उभ०-सक०-सेट् । ) क ञ, लक्षयति
लक्षयते घटं लोकः । पश्यति चिह्नयुक्तं करोती-
त्यर्थो वा । इति दुर्गादासः ॥

**लक्षं,** क्ली, (लक्षयतीति । लक्ष + अच् ।) व्याजः ।
शरव्यम् । इति मेदिनी । षे, २३ ॥ ( यथा,
मनुः । ७ । ५४ ।
“मौलान् शास्त्रविदः शूरान् लब्धलक्षान्
कुलोद्गतान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्व्वीत परीक्षि-
तान् ॥”)

**लक्षं,** क्ली, स्त्री, ( लक्षयतीति । लक्ष + अच् । )
दशायुतसंख्या । इति मेदिनी । षे, २३ ॥ लाक
इति भाषा । (यथा, कथासरित्सागरे ।४३।१०९।
“तस्मोकाद्य्रभिमित्रैः सहायातेर्न्वस्य हि ।
लक्षमभ्यधिकं देव वर्त्तते वरवाजिनाम् ॥”)

**लक्षकं,** क्ली, ( लक्षयतीति । लक्ष + ण्वुल् । )
लक्षयति यत् । यथा । लक्षकं नाम लक्षयति ।
“याद्दशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत् ।
तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि ॥”
याद्दशार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव
ताद्दशार्थे लक्षकं यदि ताद्दशार्थे शक्तिशून्यं
भवेत् । सैन्धवादयस्तु शब्दाः तुरगादिसम्ब-
न्धिनि लवणादाविव तुरगाद्यावपि शक्ता एव ।
गङ्गादयस्तु तीरादावसङ्केतिताः तत्सम्बन्धि-
नीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोध-
यन्ति तत्र लक्षका एव । अपि च । तदेव
त्रिधलक्षणावत्त्वाल्लक्षकं नामापि जहत्-
स्वार्थादिभेदादनेकविधमित्यर्थः स्यादेतद्यदि
तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीरा-
द्यनुभवे भवेद्धेतुस्तदोक्तक्रमेण लक्षकाणां
विभागो न त्वेतदस्ति । तीराद्यन्वयबोधं प्रति
तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतु-
तया लक्षकाणामननुभावकत्वात् गुरूणामग्नौ
शैत्यं स्पृशेदित्यादौ शक्येन दहनादिनेव गङ्गायां
घोष इत्यादौ लक्षितेन तीरादिना साद्धम-
गृहीतासंसर्गकस्यैव समभ्यर्थाधियत्वान्वयबोध-
प्रविष्टत्वादिति चेन्न । प्रकृत्यर्थावच्छिन्नस्यैव प्रत्य-
यार्थस्य धर्म्मान्तरेऽन्वयबुद्धेर्व्युत्पन्नतया तीराद्य-
विशेषितस्य सुबर्थाधियत्वादेर्घोषाद्यावन्वयबोधा-
योगात् । न च शक्तस्यैव पदस्य स्वयाकाङ्क्ष-
पदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्म्मिकान्वय-
बोधं प्रति हेतुत्वादन्वयबुद्धौ लक्षार्थस्य प्रवेशः ।

कुन्ताः प्रविशन्तीत्यादौ लक्षस्य कुन्तधरादेर-
न्वयविशेष्यत्वानुपपत्तेः । कुमतिः पशुरित्यादौ
लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यनुभविकत्वाच्च ।
तस्मात् शक्तेरिव भक्तेरपि ज्ञानमनुभावकं भा-
व्यैव कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभि-
चारः । इति शब्दशक्तिप्रकाशिका ॥

**लक्षणं,** क्ली, ( लक्ष्यतेऽनेनेति । लक्ष + ल्युट् ।
यद्वा, “लक्षेरट् च ।” उणा० ३ । ७ । इति
नप्रत्ययस्तस्याडागमश्च । ) चिह्नम् । ( यथा,
रघुः । १० । ६ ।
“अवाक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्ष-
णम् ॥”)
नाम । इति मेदिनी । णे, ७५ । लक्ष्यते ज्ञायते-
ऽनेनेति लक्षणम् । तद्द्विविधम् । इतरभेदानु-
मापकम् । व्यवहारप्रयोजकञ्च । इति न्याय-
मतम् ॥ व्याकरणमते तु ।
“कृत्तद्धितसमासानामभिधानं नियामकम् ।
लक्षणन्त्वनभिज्ञानां तदभिज्ञानसूचकम् ॥”
इति वोपदेवः ॥
( लक्षणलक्षणन्तु । “समानासमानजातीयो
व्यवच्छेदो लक्षणार्थः ।” इति सांख्यतत्त्वकौमु-
द्याम् ।५॥ सुखदुःखलक्षणं यथा, मनौ ।४।१६०।
“सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः ॥”)
दर्शनम् । इति लक्षधात्वर्थदर्शनात् ॥

**लक्षणः,** पुं, (लक्ष + “लक्षेरट् च ।” उणा० ३।७।
इति नस्तस्याडागमश्च । लक्षणमस्त्यस्येति अच्
वा । ) सौमित्रिः । यथा, हरिवंशे । ४१ ।१९९ ।
“लक्षणानुगतो यत्र सर्व्वभूतहिते रतः ।
चतुर्द्दश वने तप्त्वा तपो वर्षाणि राघवः ॥”)
सारसपक्षी । इति शब्दरत्नावली ॥

**लक्षणा,** स्त्री, ( लक्षण + टाप् । ) सारसी । इति
मेदिनी । णे, ७५ ॥ हंसी । इति सिद्धान्त-
कौमुद्यामुणादिवृत्तिः ॥ (अप्सरोविशेषः । यथा,
महाभारते । १ । १२३ । ५९ ।
“अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥”)
शक्यसम्बन्धः । यथा,—
“लक्षणा शक्यसम्बन्धस्तात्पर्य्यानुपपत्तितः ॥”
इति भाषापरिच्छेदः ॥
गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे
प्रवाहरूपे घोषस्यान्वयानुपपत्तेस्तात्पर्य्यानुप-
पत्तेर्व्वा यत्र प्रतिसन्धीयते तत्र लक्षणया
तीरस्य बोधः । सा च शक्यसम्बन्धरूपा । तथा
हि प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृही-
तत्वात्तीरस्य स्मरणं ततः शाब्दबोधः । इति
सिद्धान्तमुक्तावली ॥ * ॥ अपि च ।
“जहत्स्वार्थाजहत्स्वार्थानिरूढाधुनिका-
दिकाः ।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा ॥”
काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया
जहत्स्वार्थेत्युच्यते । यथा तीरमादिना गङ्गादि-
पदस्य । काचिच्छक्यलक्ष्योभयवृत्तिना शक्य-

समवायिकारणविसदृशकार्य्योत्पत्तिः । यथा, सांख्यतत्त्वकौमुद्याम् ।

"एकस्य सतो विवर्त्तः कार्य्यजातं न तु वस्तु सत् ॥")

विवर्त्तनं, क्ली, परिभ्रमणम् । विपूर्ब्बकवृतधातो-र्णट् ( ल्युट् ) प्रत्ययेन निष्पन्नम् ॥ ( यथा, किराते । ५ । ४० ।

"कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥")

विवशः, त्रि, (विवशं वष्टीति । वि+वश+अच् ।) अवश्यात्मा । अरिष्टदुष्टधीः । इति मेदिनी ॥ हे आसन्नमरणस्तथिन्मलचणेन दूषितबुद्धौ । विवशं वष्टि विवशः अल् । आसन्नमरणज्ञापकं लिङ्गमरिष्टम् । तेन दुष्टा धीर्यस्य स तथा । इत्यमरटीकायां भरतः ॥

विवस्वती, स्त्री, सूर्य्यनगरी । इति मेदिनी ॥

विवस्वान्, [त्] पुं, ( विशेषेण वस्ते आच्छादय-तीति । वि+वस्+क्विप् । विवस्तेजोऽस्या-स्तीति । विवस्+मतुप् । मस्य वः । "तसौ मत्वर्थे ।" १।४।१९ । इति भत्वात्रुत्वाभावः । ) सूर्य्यः । ( यथा, किराते । ५ । ३८ ।

"भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः ॥" )

अर्कवृक्षः । इत्यमरः ॥ देवता । इति मेदिनी ॥ अरुणः । इति शब्दरत्नावली ॥ वैवस्वतमनुः । इत्यजयः ॥ (मनुष्यः । इति निघण्टुः ।२।३।२४॥ "वस निवासे इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति क्विप् । दृशिग्रहणात् भावे भवति । विविधं वसनं विवः । तद्वन्तो विवस्वन्तः । सर्व्वस्यापि मनुष्यस्य यत्किञ्चित् विवसनमस्ति ।" इति तट्टीका ॥ * ॥ परिचरणशीले, त्रि । यथा, ऋग्वेदे । १० । ६५ । ६ ।

"देवेभ्यो दाशद्धविषा विवस्वते ॥"
"हविषा अन्नेन देवान् विवस्वते परिचरते ।" इति तद्भाष्ये सायणः ॥)

विवाकः, त्रि, विवेचनकर्त्ता । यथा,—

"अर्थिप्रत्यर्थिनोर्व्वचनं विरुद्धाविरुद्धं सभ्यैः सह विविनक्ति विवेचयति वा विवाकः ।" इति मिताक्षरा ॥

विवादः, पुं, विरुद्धो वादो विवादः । स च धन-विभागादिविषयन्यायादिः । इति भरतः ॥ तत्पर्य्यायः । व्यवहारः २ । इत्यमरः ॥ ऋणादि-न्यायः ३ । इति जटाधरः ॥

"ऋणादिदायकलहे द्वयोर्ब्बहुतरस्य वा ।
विवादो व्यवहारश्च द्वयमेतन्निगद्यते ॥"
इति शब्दरत्नावली ॥ * ॥

मात्रादिना विवादनिषेधो यथा,—

"आचरेत् सर्व्वधर्म्मं तद्विरुद्धन्तु न चाचरेत् ।
मातापित्रतिथीतुल्यैर्विवादं नाचरेत् गृही ॥"
इति गारुडे ८९ अध्यायः ॥ * ॥

अष्टादश विवादस्थानानि यथा,—

"तेषामाद्यमृणादानं निःक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्म्मश्च पारुष्ये दण्डवाचिके ।
स्तेयञ्च साहसञ्चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्म्मो विभागश्च द्यूतमाह्वयमेव च ।
पदान्यष्टादशैतानि व्यवहारस्थिता विदुः ॥"
इति मनुः ॥

अस्यार्थः । ऋणस्याधमर्णोत्तमर्णरूपो निर्णयः । अस्वामिना च कृतो विक्रयः । सम्भूय वणिगा-दीनां क्रियानुष्ठानम् । दत्तस्य धनस्यापात्र-बुद्ध्या क्रोधादिना वा ग्रहणम् । कर्म्मकारस्य भृतेरदानम् । कृतव्यवस्थातिक्रमः । क्रये विक्रये च कृते पश्चात् या विप्रतिपत्तिः । स्वामिपशु-पालयोर्विवादः । ग्रामादिसीमाविप्रतिपत्तिः । वाक्पारुष्यं आक्रोशनादि । दण्डपारुष्यं ताड-नादि । स्तेयं निह्नवेन धनग्रहणम् । साहसं प्रसह्य धनहरणादि स्त्रियाश्च परपुरुषसम्पर्कः । स्त्रीसहितस्य पुंसो धर्म्मव्यवस्था । पैतृकादि-धनस्य विभागः । द्यूतं अक्षादिक्रीडा । आह्वय पणव्यवस्थापूर्ब्बकं पक्षिमेषादिप्राणियोधनम् । इति कुल्लूकभट्टः ॥ ( कलहः । यथा, रघुः । ७ । ५३ ।

"परस्परेण क्षतयोः प्रहर्त्तो-
रुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्त्यभावेऽपि कयोश्चिदासी-
देकाप्सरःप्रार्थितयोर्विवादः ॥")

विवादानुगतः, त्रि, (विवादं अनु गतः ।) विवाद-कर्त्ता । यथा, मिताक्षरायाम् ।

"विवादानुगतं पृष्ट्वा ससभ्यस्तत् प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः ॥"

विवादी, [न्] त्रि, ( विवादोऽस्यास्तीति । विवाद +इनिः । ) विवादकर्त्ता । यथा,—

"अनुभावी च यः कश्चित् कुर्य्यात् साक्ष्यं
विवादिनाम् ॥"
इति व्यवहारतत्त्वम् ॥

विवाहः, पुं, ( विशिष्टं वहनम् । वि+वह+ घञ् । ) उद्वाहः । दारपरिग्रहः । तत्पर्य्यायः । उपयमः २ परिणयः ३ उद्वाहः ४ उपयामः ५ पाणिपीडनम् ६ । इत्यमरः ॥ दारकर्म्म ७ करग्रहः ८ । इति शब्दरत्नावली ॥ पाणि-ग्रहणम् ९ निवेशः १० पाणिकरणम् ११ । इति जटाधरः ॥ स चाष्टविधः । यथा,—

"ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोयुगम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥
इत्युक्ता चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षड्वंश्यांश्च सहात्मना ॥
आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥"
इति याज्ञवल्क्यः ॥ * ॥

अपि च ।

"गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम् ।
गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ॥
वर्षैरेकगुणां भार्य्यामुद्वहेत्त्रिगुणः स्वयम् ।
नातिकेशामकेशां वा नातिकृष्णां न पिङ्गलाम् ॥
निसर्गतोऽधिकाङ्गीं वा न्यूनाङ्गीमपि नोद्वहेत् ।
अविशुद्धां सरोमां वा कुलजां वातिरोगिणीम् ॥
न दुष्टां दुष्टवाचाटां व्याङ्गिनीं पितृमातृतः ।
न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ॥
न घर्घरस्वरां क्षामवाक्यां काकस्वरां न च ।
नातिबद्धेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः ॥
यस्याश्च रोमशे जङ्घे गुल्फौ चैव तथोन्नतौ ।
कूपौ यस्या हसन्त्याश्च गण्डयोस्तां न चोद्वहेत् ॥
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीनहस्तपादाञ्च न कन्यामुद्वहेद्बुधः ॥
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवम् ।
न चातिच्छिद्रदशनां न करालमुखीं नरः ॥
पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ।
गृहस्थश्चोद्वहेत् कन्यां न्यायेन विधिना नृप ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वराक्षसौ चान्यौ पैशाचश्चाष्टमोऽधमः ॥
एतेषां यस्य यो धर्म्मो वर्णस्योक्तो मनीषिभिः ।
कुर्व्वीत दाराहरणं तेनान्यं परिवर्ज्जयेत् ॥
स धर्म्मचारिणीं प्राप्य गार्हस्थ्यं सहितस्तया ।
समुद्वहेद्ददात्येतत् सम्यगूढं महाफलम् ॥"
इति विष्णुपुराणे ३ अंशे १० अध्यायः ॥ * ॥

अन्यच्च ।

याज्ञवल्क्य उवाच ।

"प्रणयन्तु मुनयो धर्म्मान् गृहस्थस्य यतव्रताः ।
गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया ॥
अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्व्विकां कान्तामसपिण्डां यवीयसीम् ॥
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ।
पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ॥
दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ।
सवर्णः श्रोत्रियो विद्वान् वरदोषान्वितो न च ॥
यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।
न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥
तिस्रो वर्णानुपूर्ब्ब्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्य्या वा शूद्रजन्मनः ॥
ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥
यज्ञस्थायर्त्विजे दैवमादायार्षस्तु गोयुगम् ।
चतुर्द्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥
इत्युक्ता चरतां धर्म्मं सह या दीयतेऽर्थिने ।
सकायः पावयेत्तज्जः षड्वंश्यानात्मना सह ॥
आसुरो द्रविणादानात् गान्धर्व्वः समयान्मिथः ।
राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात् ॥
चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्व्वराक्षसौ ।
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥
पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्व्वनाशे प्रकृतिस्थः परः परः ॥
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ।
गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयंवरम् ॥
सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक् ।
अदुष्टां हि त्यजन् दण्ड्यः सुदुष्टां हि परि-
त्यजेत् ।”

इति गारुडे ९५ अध्यायः ॥ * ॥

अपरञ्च ।

यम उवाच ।

“कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वल-
ङ्कृताम् ।
ब्रह्मदेयां द्विजश्रेष्ठ ब्रह्मलोकं व्रजन्ति ते ॥
कन्यादानन्तु सर्व्वेषां दानानामुत्तमं स्मृतम् ॥
महान्त्यपि समृद्धानि गोऽजाविकधनान्यतः ।
स्त्रीसम्बन्धे दशैमानि कुलानि परिवर्ज्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षय्यामयसदावाप्यश्विनिकुष्ठिकुलानि च ॥
यस्यास्तु न भवेद्भ्राता न च विज्ञायते पिता ।
नोपयच्छेत तां प्राज्ञः पुत्त्रिकाधर्म्मशङ्कया ॥
चतुर्णामपि वर्णानां प्रेत्य चेह हिताय च ।
अष्टाविमान् समासेन स्त्रीविवाहान्निबोधत ॥
ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥
प्रसाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम् ।
दद्यात् कन्यां यथान्यायं ब्राह्मो धर्म्मः प्रकी-
र्त्तितः ॥ १ ॥
यज्ञे तु वितते सम्यगृत्विजे कर्म्म कुर्व्वते ।
अलङ्कृत्य तथा दानं दैवो धर्म्मः प्रशस्यते ॥२॥
एकं गोमिथुनं द्वे वा वरादादाय धर्म्मतः ।
कन्यादानन्तु विधिवदार्षो धर्म्मः स उच्यते ॥३॥
सहोभौ चरतां धर्म्ममिति चैवानुभाष्य तु ।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः॥४॥
ज्ञातिभ्यो द्रविणं दत्त्वा कन्यायै चैव शक्तितः ।
कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म्म उच्यते ॥५॥
इच्छयान्योन्यसंयोगात् कन्यायाश्च वरस्य च ।
गान्धर्व्वः स तु विज्ञेयो मिथुन्यः कामसम्भवः ॥६॥
हत्वा छित्वा च भित्त्वा च प्रसह्य रुदतीं गृहात् ।
हरणं क्रियते यत्र राक्षसो विधिरुच्यते ॥ ७ ॥
सुप्तां मत्तां रहः कन्यां छद्मना नीयते तु या ।
स पापिष्ठो विवाहानां पैशाचः प्रथितो-
ऽष्टमः ॥ ८ ॥
पञ्चानाञ्च त्रयो धर्म्म्या द्वावधर्म्म्यौ द्विजोत्तम ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
चतुर्णामपि वर्णानामेष धर्म्मः सनातनः ।
पृथग्वा यदि वा मिश्रा कर्त्तव्या नात्र संशयः ॥
कन्यां ये तु प्रयच्छन्ति यथाशक्त्या स्वलङ्कृताम् ।
विवाहकाले संप्राप्ते यथोक्ते सदृशे वरे ।
क्रमात् क्रमं क्रतुशतमनुपूर्व्वं लभन्ति ते ॥
श्रुत्वा कन्याप्रदानन्तु पितरः प्रपितामहाः ।
विमुक्ताः सर्व्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥
ब्राह्मेण तु विवाहेन यस्तु कन्यां प्रयच्छति ।
ब्रह्मलोकं व्रजेच्छीघ्रं ब्रह्माद्यैः पूजितः सुरैः ॥
दैवेन तु विवाहेन यस्तु कन्यां प्रयच्छति ।
भित्त्वा द्वारन्तु सूर्य्यस्य स्वर्गलोकञ्च गच्छति ॥
गान्धर्व्वेण विवाहेन यस्तु कन्यां प्रयच्छति ।
गन्धर्व्वलोकमासाद्य क्रीडते देववच्चिरम् ॥
शुल्केन दत्त्वा यो कन्यां तां पश्चात् सम्यगर्च्चयेत् ।
स किन्नरैश्च गन्धर्व्वैः क्रीडते कालमक्षयम् ॥
न मन्युं कारयेत् तासां पूज्याश्च सततं गृहे ।
ब्रह्मदेया विशेषेण ब्राह्मभोज्या सदा भवेत् ॥
कन्यायां ब्रह्मदेयायामभुञ्जन् सुखमश्नुते ।
अथ भुङ्क्ते यो मोहात् भुक्त्वा स नरकं व्रजेत् ॥*
अप्रजायाश्च कन्यायां न भुञ्जीयात् कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि ॥
महारत्नसमाकीर्णान्नास्ति ते नरकाद्भयम् ।
तीर्णस्त्वं सर्व्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि ॥”
इत्याद्ये वह्निपुराणे तडागकृत्यप्रशंसानामा-
ध्यायः ॥ * ॥ विवाहकाले मिथ्यावचने दोषा-
भावो यथा,—

शर्म्मिष्ठोवाच ।

“न नर्म्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन् न विवाहकाले ।
प्राणात्यये सर्व्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥”

इति मात्स्ये ३१ अध्यायः ॥ * ॥

विवाहे वर्णनीयानि यथा,—
“विवाहे स्नानशुभ्राङ्गभूषालूलुत्रयीरवाः ।
देवी संगीतनारेचा लाजमङ्गलवर्त्तनम् ॥”
इति कविकल्पलतायाम् १ स्तवके १ कुसुमम् ॥*॥
अथ विवाहोक्तदिनानि । तत्राब्दादिशुद्धि-
र्यथा,—
“प्रसूत्याधानतः शुद्धिर्विषमेऽब्दे समे क्रमात् ।
विवाहे योषितां चन्द्रार्केज्यशुद्धिर्नृयोषितोः ॥
समर्तुकक्रियारम्भे भर्त्तुर्गोचरशुद्धितः ।
यात्रोद्वाहे गर्भहत्ये स्वशुद्ध्याप्नोति तत् फलम् ॥
प्रारभ्य जन्मसमयात् युवतेर्विवाह-
मोजाब्दकेषु मुनयः शुभमादिशन्ति ।
आधानतः प्रभृतितः समवत्सरेषु
प्रोक्तस्तयोर्न शुभदस्तु विलोमवर्षे ॥ * ॥
अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत् ।
तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥
मासत्रयादूर्द्ध्वमयुग्मवर्षे
युग्मे च मासत्रयमेव यावत् ।
विवाहशुद्धिं प्रवदन्ति सर्व्वे
वात्स्यादयो ज्योतिषि जन्ममासात् ॥
युग्माब्दकेषु युवतेरपि जन्ममासात्
मासत्रयं विवहने परमब्दशुद्धिम् ।
प्राहुः समस्तमुनयो विषमे तु वर्षे
मासत्रयादुपरितः खलु जन्ममासात् ॥”*॥
राजमार्त्तण्डे ।
“माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्ज्जिताः ॥”
कन्यासंवरणे इक्षोदकविधौ ।
“दम्पत्योर्द्दिनवासराशिरहिते दाराशुभे रवौ
चन्द्रे चार्कशुभार्किशुक्रविधुते मध्येऽथवा
पापयोः ।
त्यक्त्वा च व्यतिपातवैधृतिदिनं विष्टिञ्च रिक्तां
तिथिं
क्रूराहायनचैत्रपौषरहिते लग्नाष्टके माशुचि ।”*
योगविशेषे दोषविशेषानाह रत्नमालायाम् ।
“कुलोच्छेदो व्यतीपाते परिघे स्वामिघातिनी ।
वैधृतौ विधवा नारी विषदाहोऽतिगण्डके ॥
व्याघाते व्याधिसंघातः शोकार्त्ता हर्षणे तथा ।
शूले च व्रणमूलं स्यात् गण्डे रोगभयं तथा ॥
विष्कम्भेऽप्यहिदंशः स्यात् वज्रके मरणं भवेत् ।
एते वै दारुणाः सर्व्वे दश योगाः प्रकीर्त्तिताः ॥”
आश्वलायनः । उदगयने आपूर्य्यमाणे पक्षे
कल्याणे नक्षत्रे चौडकर्म्मोपनयनगोदान-
विवाहाः । विवाहः सार्व्वकालिक इत्येक इति ।
“आषाढ़े धनधान्यभोगरहिता नष्टप्रजा श्रावणे
वेश्या भाद्रपदे इषे च मरणं रोगान्विता
कार्त्तिके ।
पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी
अन्येष्वेव विवाहिता पतिरता नारी सम्पद्धा
भवेत् ॥
हरौ च सुप्ते न च दक्षिणायने
तिथौ च रिक्ते शशिनि क्षयं गते ॥
राजग्रस्ते तथा युद्धे पितॄणां प्राणसंशये ।
अतिप्रौढ़ा च या कन्या नानुकूलं प्रतीक्षते ॥
अतिप्रौढ़ा च या कन्या कुले धर्म्मविरोधिनी ।
अविशुद्धापि सा देया चन्द्रलग्नबलेन तु ॥
अयनस्योत्तरस्यादौ मकरं याति भास्करः ।
राशिं कर्कटकं प्राप्य कुरुते दक्षिणायनम् ॥”
इति विष्णुपुराणोक्तस्य चूडादावयनस्य परिग्रहः
दिनमानादिबोधे तु सिद्धान्तादयनपरिग्रहः ॥*॥
सार्व्वकालिक इत्यस्य विषयमाह भुजबलभीमे ।
“गर्भशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तुदिव-
सानाम् ।
अर्व्वाक् दशवर्षेभ्यो मुनयः कथयन्ति कन्य-
कानाम् ॥
एतत्परन्तु विषयमङ्गिरोवचनं यथा ।
कालात्यये च कन्यायाः कालदोषो न विद्यते ॥
मलमासादिकालानां विवाहादौ प्रयत्नतः ।
पुंसः प्रति सदा दोषात् सर्व्वदैव हि वर्ज्जता ॥”
ज्योतिश्चिन्तामणौ ।
“वापीकूपतडागयागगमनक्षौरप्रतिष्ठाव्रतं
विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम् ।
तीर्थस्नानविवाहदेवभवनं मन्त्रादिदैवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे ॥”
हट्टराजमार्त्तण्डे ।
“सर्व्वाणि शुभकर्म्माणि कुर्य्यादस्तं गते सिते ।
विवाहं मेखलाबन्धं यात्राञ्च परिवर्ज्जयेत् ॥”
यात्राञ्चेति चकारो वचनान्तरोक्तप्रातिस्विक-
निषिद्धकर्म्मान्तरं समुच्चिनोति ।
“नाथे शुक्रे हते शुक्रे नष्टे शुक्रे जीवे नष्टे ।

बाले जीवे वृद्धे जीवे सिंहादित्ये गुर्व्वादित्ये ।
तथा मलिम्लुचे मासि सुराचार्य्येऽतिचारगे ।
वापीकूपतडागादिक्रियाः प्रागुदितास्त्यजेत् ।
अतीचारं गते जीवे वक्रे चैव बृहस्पतौ ।
कामिनी विधवा प्रोक्ता तस्मात्तौ परिवर्ज्जयेत् ।
अतीचारं गतो जीवः पूर्व्वभं नैव गच्छति ।
समचारेऽपि कर्म्माणि नैव तत्रैव संस्थिते ।"॥
देवलः ।
"बाले वृद्धे तथैवास्ते कुरुते दैत्यमन्त्रिणि ।
उद्वाहितायां कन्यायां दम्पत्योरेव नाशनम् ।
प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात्
पश्चाद्दशाहमिति पञ्चदिनानि वृद्धः ।
प्राक् पञ्चमेव कथितोऽत्र वशिष्ठगर्ग-
जीवस्तु पञ्चमपि वृद्धशिशुर्व्विवर्ज्यः ।"
अतस्तात्पर्य्यं राजमार्त्तण्डः
"बाले वृद्धे च सन्ध्यांशे चतुःपञ्चत्रिवासरान् ।
जीवे च भार्गवे चैव विवाहादिषु वर्ज्जयेत् ।
वक्रे चैवातिचारे त्रिदशपतिगुरौ दैत्यपूज्ये च सुप्ते
गुर्व्वादित्येऽधिमासे दिवसकररिपौ वाक्पतौ चैत्रपौषे ।
सिंहे केतूद्गमे वा शरदि सुरगुरौ सिंहसंस्थे मनोज्ञे
वर्षाद्दाप्नोति चोढ़ा सुनियतमरणं देवकन्यापि भर्त्तुः ।"॥
शुक्रमधिकृत्य राजमार्त्तण्डे ।
"बाले च दुर्भगा नारी वृद्धे नष्टप्रजा भवेत् ।
नष्टे च मृत्युमाप्नोति सर्व्वमेतद्गुरावपि ।
सिंहे गुरौ परिणीता पतिमात्मानमात्मजान् हन्ति ।
क्रमशस्त्वेषु पित्रादिषु वशिष्ठगर्गादयः प्राहुः ।
गुरौ हरिस्थे न विवाहमाहु-
र्हारीतगर्गप्रमुखा मुनीन्द्राः ।
यदा न माघी मघसंयुता स्यात्
तदा तु कन्योद्वहनं वदन्ति ।"
अत्रैव माण्डव्यः ।
"मघाक्षं परित्यज्य यदा सिंहे गुरुर्भवेत् ।
तत्राब्दे कन्यका चोढ़ा सुभगा सुप्रिया भवेत् ।"
हारीतः ।
"अतीचारं गते जीवे हरौ वृश्चिककुम्भयोः ।
यज्ञोद्वाहादिकं कुर्य्यात् तत्र कालो न लुप्यते ।"
ज्ञानचिन्तामणौ ।
"अतीचारं गते जीवे हरौ वृश्चिककुम्भयोः ।
तत्र चोद्वाहिता कन्या संप्राप्नोयात् कुलद्वयम् ।"
शङ्खनकौमुद्यां भीमपराक्रमे ।
"यदातिचारं सुरराजमन्त्री
करोति गोमन्मथमीनसंस्थः ।
न याति चेद्वक्रदपि पूर्व्वराशिं
शुभाय पाणिग्रहणं वशिष्ठः ।
अतीचारं गते जीवे स्थिरराशौ च संस्थिते ।
तत्र न लुप्यते कालो वदत्येवं पराशरः ।
वापीकूपतडागादि निषिद्धं सिंहगे गुरौ ।
मकरस्थे च तत् कार्य्यं न दोषः काललोपजः ।"
यत्तु ।
"कन्यावृश्चिकमेषेषु मन्मथे च भषे हरौ ।
अतिचारेऽपि कर्त्तव्यं विवाहादि बुधैः सदा ।"
इत्येतन्मूलं हैतनिर्णयेऽप्युक्तम् ॥ * ॥ दीपिकायाम् ।
"त्रिकोणजायाधनलाभराशौ
वक्रातिचारेण गुरुः प्रयातः ।
यदा तदा प्राह शुभे विलग्ने
हिताय पाणिग्रहणं वशिष्ठः ।"
देवीपुराणम् ।
"मकरस्थो यदा जीवो वर्ज्जयेत् पञ्चमांशकम् ।
शेषेष्वपि च भागेषु विवाहः शोभनो मतः ।"
भोजराजः ।
"यो जन्ममासे क्षुरकर्म यात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगं धनपुत्रनाशं
प्राप्नोति मूढ़ो वधबन्धनानि ।
जातं दिनं दूषयते वशिष्ठ-
श्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च
चौड़े विवाहे क्षुरकर्णवेधे ।"
श्रीपतिसमुच्चये ।
"स्नानं दानं तपो होमः सर्व्वमङ्गलवर्द्धनम् ।
उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते ।"
रत्नचिन्तामणौ ।
"जन्ममासे च पुत्राढ्या धनाढ्या च धनोदये ।
जन्मभे जन्मराशौ च कन्या हि शुभसन्ततिः ।"
गर्गः ।
"ज्येष्ठे मासि तथा मार्गे चौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्ज्जयेत् ।"
अत्र ज्येष्ठत्वमाद्यगर्भजातत्वम् । तथा च ।
"जन्ममासि न च जन्मभे तथा
नैव जन्मदिवसेऽपि कारयेत् ।
आद्यगर्भभवपुत्रकन्ययो-
र्ज्येष्ठमासि न च जातु मङ्गलम् ।"
अत्र जन्ममासादौ पुत्रमात्रस्य निषेधः ज्येष्ठमासे तु ज्येष्ठपुत्रस्येति विशेषः ।
"कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ।
उत्सवेषु च सर्व्वेषु दिनानि दश वर्ज्जयेत् ॥ * ॥
रेवत्युत्तररोहिणीमृगशिरोमूलानुराधामघा-
हस्तास्वातिषु तौलिषष्ठमिथुनेषूद्यत्सु पाणिग्रहः ।
सप्ताष्टान्त्यवहिःशुभैरुडुपतावेकादशद्वित्रिगे
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ।"
ज्योतिर्व्विहितनक्षत्रात् अधिकं चित्राश्रवणाधनिष्ठाश्विनीनक्षत्रं पारस्करोक्तं यथा,—
"कुमार्य्याः पाणिं गृह्णीयात् त्रिषु त्रिषूत्तरादिषु ।"
उत्तरफल्गुन्यादित्रयोत्तराषाढ़ादित्रयोत्तरभाद्रपदादित्रयेषु नवसु नक्षत्रेष्वित्यर्थः ॥ * ॥ भीमपराक्रमे ।
"पूर्व्वात्रये विशाखायां शिवाख्ये भचतुष्टये ।
ऊढ़ा चाशु भवेत् कन्या विधवातो विवर्ज्जयेत् ।
विश्वभाद्ये त्रिके त्रिचे ज्येष्ठायां श्रवणे यमे ।
एभिर्व्विवाहिता कन्या भवत्येव सुदुःखिता ।"
एवञ्च पारस्करोक्तं मनुर्व्वेदविषयमापद्विषयं वा बोध्यम् ॥ * ॥
"आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च ।
रेवत्यन्त्यचतुर्भागे विवाहः प्राणनाशकः ।
कर्णवेधे विवाहे च व्रते पुंसवने तथा ।
प्राशने चाद्यचूड़ायां विद्धर्क्षं विवर्ज्जयेत् ।"
विद्धर्क्षं तु ।
"तिथ्य१५र्क्ष१२वेदे१४का१२दशो१०नविंश१९
भै२७कादशा११दाश२८विंश२०संख्याः ।
दृष्टोनुना सूर्य्ययुतोडुना च
योगाद्भवेद्दग्धयोगभङ्गः ।"
कर्म्मकालीनचन्द्रनक्षत्रसूर्य्यभुज्यमाननक्षत्रयोर्म्मिलने यदि पञ्चदशाद्यन्यतमसंख्या भवति तदा न कर्म्मयोग्यमित्यर्थः । सप्तविंशाधिकत्वे सप्तविंशतिमपहाय शेषात् फलं अन्यथैकसंख्यानुपपत्तेः ॥ * ॥ अपवादस्तु ।
"आद्यपादे स्थिते सूर्य्ये तुरीयांशं प्रदुष्यति ।
द्वितीयस्थे तृतीयन्तु विपरीतमतोऽन्यथा ।"
यत्तमाह चरोदये ।
"आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् ।
द्वितीयेन तृतीयन्तु तृतीयेन द्वितीयकम् ।"
अत्रैव खर्ज्जूरवेधः । तथा च रत्नमाला ।
"एकामूर्द्ध्वगतां त्रयोदश तथा तिर्य्यग्गताः स्थापयेत्
रेखाचक्रमिदं बुधैरभिहितं खार्ज्जूरिकं तत्र तु ।
आद्यातादि तु सार्भि भन्तु कथितं तत्रैकरेखास्थयोः
सूर्य्याचन्द्रमसोर्म्मिथो निगदिता दृक्पात एकार्गलः ।"
आद्यातादीनि व्याघातयोगसंख्यातुल्ययोरेशाङ्कम् । तथा च हस्तादीनि नक्षत्राणि ज्ञेयानीत्यर्थः ॥ * ॥ अथ सप्तशलाकावेधः । दीपिकायाम् ।
"कृत्तिकादिचतुःसप्तरेखाराशौ परिभ्रमन् ।
यद्येकरेखायो वेधः सप्तशलाकजः ।
सप्त सप्त विलिखेत् परेखिका-
स्तिर्य्यगूर्द्ध्वमथ कृत्तिकादिकम् ।
लेखयेदभिजिता समन्वितं
चैकरेखगखगेन विध्यते ।
वेधस्य चतुर्दशांशे श्रवणादौ त्रिमिकाचतुर्व्वे च ।
अभिजित्तस्य खिचरे विज्ञेया रोहिणीविद्धा ।"
त्रिमिकादकः ॥ * ॥
"यस्याः शशी सप्तशलाकभिन्नः
पापैरपापैरथवा विवाहे ।
रक्ताम्बुकेनैव तु रोदमाना
श्मशानभूमिं प्रमदा प्रयाति ।"

अस्यापवादो यथा, राजमार्त्तण्डे ।

"विषप्रदिग्धेन हतस्य पत्रिणा
मृगस्य मांसं शुभदं यथाहृते ।
यथा तथाप्युग्रुपाद एव
प्रदूषितोऽप्योडुपदं शुभावहम् ॥"

अथ पञ्चशलाकाचक्रम् ।

"ऊर्द्धं रेखास्थिताः पञ्च तिर्य्यक् पञ्च तथैव च ।
द्वे द्वे च कोणयो रेखे वाभिजित् कृत्तिकादिकम् ॥
शम्भुकोणे द्वितीये तु वेधयेत् सर्व्वकर्म्मणि ।
क्रूरैर्भिन्नमधो सौम्यैर्नचापं परिवर्ज्जयेत् ॥
लत्तापाते च ये दोषा ये च सप्तशलाकके ।
ते सर्व्वे प्रभवन्त्यत्र नाम्ना पञ्चशलाकके ॥
अथ चक्रान्तरे कश्चित् पादवेध इहेष्यते ।"

तदुक्तं रत्नमालायाम् । केचित्तत्रापीच्छन्ति पादवेध इति । इति पञ्चशलाकाचक्रम् ॥ * ॥

रत्नमालायाम् ।

"सौम्यं हादशशतमार्ज्जारस्थिरवणीकसुतस्तृतीयं गुरुः
षष्ठं चाष्टममर्कजस्तु पुरतो हन्ति स्फुटं लत्तया ।
पश्चात् सप्तमभिन्दुजस्तु नवमं राहुः सितः पञ्चमम् ।
द्वाविंशं परिपूर्णमूर्त्तिरखुपः सन्ताडयेत्तिरन् ॥"

लत्तापातोऽयम् ॥ * ॥

"पापात् सप्तमगः शशी यदि भवेत् पापेन युक्तोऽथवा
यस्मात् तं परिवर्ज्जयेत् मुनिमतो दोषो ह्ययं कथ्यते ।
यात्रायां विपदो गृहे सुतवधः चौरेषु रोगोद्भवोऽप्युद्वाहे विधवा व्रते च मरणं मूलञ्च पुंस्कर्म्मणि ॥" * ॥

"रविमन्दकुजाक्रान्तं लग्नाङ्कात् सप्तमं त्यजेत् ।
विवाहयात्राचूडासु गृहकर्म्मप्रवेशने ॥"

यामित्रवेधः ॥ * ॥

"मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो
मित्रर्क्षसौम्यगृहगोऽथ सदोदितो वा ।
यामित्रवेधविहितानपहत्य दोषान्
दोषाकरः शुभमनेकविधं विधत्ते ॥" * ॥

भोजराजः ।

"त्रिषडृशैकादशगो दिनेशः
सुतार्थसौभाग्यशुभप्रदः स्यात् ।
वैधव्यदाताष्टमराशिसंस्थः
शेषेषु रुग्दुःखशुचः करोति ॥"

रविशुद्धिः ॥ * ॥

"कन्यानृचन्द्रशुद्धौ स्याद्विवाहः शुभलग्नयाम् ।
पश्चाद्रविविशुद्ध्या तु यात्रापुष्योत्सवादयः ॥"

विद्याधरीविलासे ।

"पुंसामर्कः स्मृतो योषितां विलासभृगुतः ।
अतः पुंयोषितोः प्रश्नं बलमर्कशशाङ्कजम् ॥
गोचरस्थाविन्दु कन्याया यत्नतः शुभं वीक्ष्य ।
तिग्मकिरणञ्च पुंसः शेषैरबलैरपि विवाहः ॥

द्वितीयपुत्राद्यमतः प्रभाकरः
त्रयोदशाब्दात् परतः शुभप्रदः ।
न जन्मसप्तव्ययरन्ध्रगस्तथा
करोति पुंसामपि ताद्दशं फलम् ॥"

तथा त्रयोदशाब्दात् परतः ॥ * ॥

"त्रयोदशद्विनाभ्यर्को दश सद्धरणीसुतः ।
सार्द्धं दिनञ्च शीतांशुर्मासमेकादश तमः ॥
सौरिः पादाधिकं वर्षं मासानष्टौ बृहस्पतिः ।
भवनार्द्धं भृगुः सौम्यो यावन्नाशशुभाः फलम् ॥
कष्टं प्रतादिके दद्युर्न तथा शेषभागगाः ॥ * ॥
लग्ने सप्तमे तूर्य्ये नवमे दशमे तथा ।
गुरुर्भृगुर्व्वा दोषघ्नो विवाहे वर्द्धते शुभम् ॥"

अयमेव सुतहिबुकयोगः ॥ * ॥

"गोधूलिं त्रिविधां वदन्ति मुनयो नारीविवाहादिके
हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे ।
ग्रीष्मेऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां
सर्व्वं चास्तमुपागते च नियतं प्रावृट्शरत्कालयोः ॥ * ॥

लग्नं यदा नास्ति विशुद्धमन्यद्
गोधूलिकां तत्र शुभां वदन्ति ।
लग्ने विशुद्धे सति वीर्य्ययुक्ते
गोधूलिका नैव फलं विधत्ते ॥ * ॥

नास्मिन् ग्रहा न तिथयो न च विष्टिभारा
ऋक्षाणि नैव जनयन्ति कदापि विघ्नम् ।
अव्याहतः सततमेव विवाहकाले
यात्रासु चायमुदितो भृगुजेन योगः ॥ * ॥

मार्गे गोधूलियोगे प्रभवति विधवा माघमासे तथैव
पुत्रायुर्धनयौवनेन सहिता कुम्भे स्थिते भास्करे ।
वैशाखे सुखदा प्रजाधनवती ज्येष्ठे पतेर्म्मानदा
आषाढ़े धनधान्यपुत्रबहुला पाणिग्रहे कन्यका ॥" * ॥

विवाहपटले ।

"व्यूढ़ा धनुषि च कुलटा तत्पूर्व्वार्द्धे सतीत्यपरे च मुः ॥" * ॥

ज्योतिःसारसंग्रहे ।

"विवाहे तु दिवाभागे कन्या स्यात् पुत्रवर्ज्जिता ।
विरहानलदग्धा या निशतं स्वामिघातिनी ॥" * ॥

महाभारते ।

"रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम् ।
विद्यां कन्यां द्विजश्रेष्ठा दीपमन्नं प्रतिश्रयम् ॥" *

व्यासः ।

"रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता ।
शनैश्चरदिने चैव यदा रिक्ता तिथिर्भवेत् ।
तस्मिन् विवाहिता कन्या पतिसन्तानवर्द्धिता ॥"

श्रुतिः ।

"धर्म्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः ।
परीक्षन्ते प्रयत्नेन पूर्व्वमेव करग्रहात् ॥" * ॥

मनुः ।

"अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत् स्त्रियम् ॥" *

शातातपः ।

"हंसस्वनां मेघवर्णां मधुपिङ्गललोचनाम् ।
तादृशीं वरयेत् कन्यां गृहस्थः सुखमेधते ॥" * ॥

भविष्ये ।

"प्रतिष्ठिततला सम्यक् रक्ताम्भोजसमत्विषः ।
तादृशाश्चरणा धन्या योषितां भोगवर्द्धनाः ॥"

प्रतिष्ठितो भूमौ लग्नः समस्तोऽधोभागो येषां ते तथा ॥ * ॥ मनुः ।

"नोद्वहेत् कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोम्नीं न वाचाटां न पिङ्गलाम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्व्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न च भीषणनामिकाम् ॥"

प्रतिप्रसवमाह मत्स्यसूक्ते ।

"गङ्गा च यमुना चैव गोमती च सरस्वती ।
नद्याख्यासां नाम वृक्षे मालती तुलसी अपि ।
रेवती चाश्विनी सेतु रोहिणी शुभदा भवेत् ॥"

हत्यचिन्तामणौ ।

"नेत्रे यस्याः केकरे पिङ्गले वा
स्याद्दुःशीला श्यावलोकेक्षणा च ।
कूपौ यस्या गण्डयोः सस्मितायां
निःसन्दिग्धं बन्धकीं तां वदन्ति ॥" * ॥

नन्दिकेश्वरपुराणे ।

"श्यामा सुकेशी तनुलोमराजी
सुभ्रूः सुशीला सुगतिः सुदन्ता ।
वेदीविमध्या यदि पङ्कजाक्षी
कुलेन हीनापि विवाहनीया ॥
घृष्टा कुदन्ता यदि पिङ्गलाक्षी
लोम्ना समाकीर्णसमाङ्गयष्टिः ।
मध्ये च पुष्टा यदि राजकन्या
कुलेऽपि योग्या न विवाहनीया ॥" * ॥

हारीतः ।

"तस्मात् कुलनक्षत्रविद्याशीलोपपन्नां वरयेत् ।"

नक्षत्रोपपन्नां नाडीनक्षत्रैर्नाम् ॥ * ॥

नाडीनक्षत्रमाह स्वरोदये ।

"अश्विन्यादि लिखेच्चक्रं सर्पाकारं त्रिनाडिकम् ।
तत्र वैधव्यशात् ज्ञेयं विवाहादि शुभाशुभम् ॥
त्रिनाडीवेधनक्षत्रमश्विन्यार्द्राद्युगोत्तरा ।
हस्तेन्द्रमूलवारुण्यः पूर्व्वभाद्रपदास्तथा ॥
याम्यः सौम्यो गुरुर्वोनिश्चित्रा मित्रजलाश्रयम् ।
धनिष्ठा चोत्तराभद्रा मध्यनाडीव्यवस्थिताः ॥ * ॥
कृत्तिका रोहिणी सर्पो मघा स्वातीविशाखयोः ।
उत्तरा श्रवणा पौष्णं पृष्ठनाडीव्यवस्थिताः ॥ * ॥
अश्विन्यादिनाडीवेधर्क्षे यदि द्वितीयकं क्रमात् ।

वाम्यादितुर्य्यतुर्य्यञ्च कृत्तिकादिद्विषट्ककम् ।
एवं विशेषयेदेवं कन्यामन्त्रे सुरे गुरौ ।
पक्षनीत्यानिमित्तेषु देशे ग्रामे पुरे गृहे ।
एकनाड़ीस्थधिष्ण्यानि यदि स्युर्वरकन्ययोः ।
तदा वेधं विजानीयात् गुर्व्वादिषु तथैव च ।
प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो बुधः ।
प्रमदं जन्मभं यस्य तस्य नामर्क्षतो वदेत् ।
द्वयोर्जन्मभयोर्वेधो द्वयोर्नामभयोस्तथा ।
नामजन्मर्क्षयोर्वेधो न कर्त्तव्यः कदाचन ।
एकनाड़ीस्थिता चेत् स्यात् भर्त्तुर्नाशाय चाङ्गना ।
तस्मान्नाड़ीवधो वीक्ष्यो विवाहे शुभमिच्छता ।
प्राङ्नाड्या वेधतो भर्त्ता मध्यनाड्योभयं तथा ।
पृष्ठनाड़ीवधे कन्या म्रियते नात्र संशयः ।
एकनाड़ीस्थिता यत्र गुरुर्मन्त्रश्च देवताः ।
तत्रेदं वर्जं नक्षत्रं क्रमेण फलमादिशेत् ।
प्रभुः पण्याङ्गनामित्रं देशो ग्रामः पुरं गृहम् ।
एकनाड़ीगता भव्या अभव्या वेधवर्ज्जिताः ।"
प्रतिप्रसवमाह ज्योतिषे ।
"एकराश्यादियोगे तु नाड़ीदोषो न विद्यते ।"
स यथा ।
"एकराशौ च दम्पत्योः शुभं स्यात् समसप्तके ।
चतुर्थे दशमे चैव तृतीयैकादशे तथा ।"
समसप्तकाद्विषमसप्तके दोषः । तथा च ।
"घोटके सप्तमे मेषतुले युग्मधयौ तथा ।
सिंहघटौ सदा वर्ज्यौ मतिं तत्राब्रवीच्छिवः ।"
श्रीपतिव्यवहारनिर्णये ।
"सुहृदेकाधिपत्योगे ताराबले वश्यराशौ वा ।
अपि नाड्यादिवेधे भवति विवाहो हिताधाय ।"
राजमार्त्तण्डे ।

"न राजयोगे ग्रहवैरिता च
न तारशुद्धिर्न गणत्रयं स्यात् ।
न नाड़िदोषो न च वर्णशुद्धि-
र्योन्यादियस्तं सुनयो वदन्ति ।"*।

राजयोगस्तु एकराश्यादियोग एव तत्रैव नाड्यादिप्रतिप्रसवात् । श्रीपतिरत्नमालायाम् ।
"अश्वे भाजपविद्वयश्च वृषभुङ्मेषोन्दुकर्म्मशिकश्वाखुर्गौः क्रमशस्ततोऽपि महिषी व्याघ्रः पुनः सौरभी ।
व्याघ्रैणौ मृगकुक्कुरौ कपिरयोरश्वं वानरः सिंहोऽश्वो मृगराट् पशुश्च करटी योनिश्च भानामिषम् ।
गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणञ्च बभ्रूरगं वैरं वानरमेषकञ्च सुमहत्तद्विड़ालोन्दुरम् ।
लोकानां व्यवहारतोऽन्यदपि च ज्ञात्वा प्रयत्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभाकाङ्क्षिभिः ।
मकरकमेतं मिथुनं कन्याकलशौ मृगेन्द्रमीनौ च ।
वृषभतुलेऽलिमेषौ कर्कटधनुषी च मित्रविधौ ।"
षड्ष्टकादिनिषेधः ।*। अरिषड्ष्टकमाह ।

"मकरः करिकुलरिपुणा
कन्या मेषेण वह मातृसुतया ।
कर्किघटौ वृषधनुषी
वृश्चिकमिथुने चारिविधौ ।*।
यदि कन्याष्टमे भर्त्ता भर्त्तुः षष्ठे च कन्यका ।
षड्ष्टकं विजानीयाद्वर्ज्जितं चिरशोऽरपि ।*।
पुंसो गृहात् सुतगृहे सुतहा च कन्या
धर्म्मे स्थिता सुतवती पतिवल्लभा च ।
द्विद्वादशे धनगृहे धनहा च कन्या
व्यये स्थिता धनवती पतिवल्लभा च ।"
षड्ष्टकादौ ताराबलमाह भीमपराक्रमः ।
"सौहृदे शुभयोर्द्वयोरपि तयोरेकाधिपत्येऽपि वा
तारा चेत्सुमित्रमित्रदृढतत्त्वेमार्यसम्पद्यदि ।
षट्काष्टे नवपञ्चमे द्विदशमे योगे च पुंयोषितोः
प्रीत्यायुःसुखवृद्धिपुत्रजनकः कार्य्यो विवाहस्तदा ।" * ।
गर्गः ।
"मरणं ताराविरोधे ग्रहरिपुभावे चिरेण ।
रोगादि मरणाद्यौः षट्काष्टके वैरमवश्यं भवेदानु ।"*।
व्यासः ।

"मैत्र्यादियोगेऽपि षड्ष्टकादौ
तारा विपत्प्रत्यरिनैधनाख्याः ।
वर्ज्या विवाहे पुरुषोत्तमो हि
प्रीतिः परा जन्मसु तारकासु ।
नक्षत्रमेकं यदि भिन्नराशि-
र्न दम्पती तत्र सुखं लभेताम् ।
विभिन्नऋक्षं यदि चैकराशि-
स्तदा विवाहः सुतसौख्यदायी ।

एकर्क्षा च यदा कन्या राशिका च यदा भवेत् ।
धनपुत्रवती नारी साध्वी भर्त्तृप्रिया सदा ।

षड्ष्टके गोमिथुनं प्रदेयं
कांस्यं सवत्सं नवपञ्चके तु ।
द्विद्वादशाख्ये कनकाम्बराद्यं
विप्रार्च्चनं चैव च नाड़ीदोषे ।

मरणं नाड़ीदोषे कलहः षट्काष्टके विपत्तिर्वा ।
अनपत्यता त्रिकोणे द्विद्वादशे च दारिद्र्यम् ।"*।
तत्त्वचिन्तामणौ ।
"हस्तास्वातिमृगतिष्यशिरःपुष्यमैत्राश्विभानि
पौष्णादित्ये जमुरिह बुधा दैवतं प्राजि भानि ।
पूर्व्वास्तिस्रः शिवभरणीरोहिणी चोत्तराश्च
प्राहुर्मर्त्याश्रयसुगणं मानवेतं मुनीन्द्राः ।
चित्राज्येष्ठानिर्ऋतिपितृभे वासवं वासवर्क्षं
प्रोक्ताश्लेषाभे मघवरवर्क्षे च रक्षोगणोऽयम् ।"
फलमाह श्रीपतिः ।
"स्वकुले चोत्तमा प्रीतिर्मध्यमा देवमानुषे ।
देवासुरे कनिष्ठा च मृत्युर्मानुषराक्षसे ।
राक्षसी च यदा कन्या मानुषश्च वरो भवेत् ।
तदा मृत्युर्न दूरस्थो निश्चयेनमथापि वा ।"
राजमार्त्तण्डे ।
"यदि स्याद्राक्षसो भर्त्ता कन्यका मानुषी भवेत् ।
विवाहे सुखमाप्नोति वैपरीत्यं विवर्ज्जयेत् ।"
युद्धजयार्णवे ।
"देवा जयन्ति युद्धेन मर्त्त्या नात्र संशयः ।
रक्षसा मानुषाश्चात्र संग्रामे निश्चिता मृतिः ।
कर्किमीनालयो विप्राः क्षत्त्राः सिंहतुलाधराः ।
वैश्या युग्माजकुम्भाख्याः शूद्रा वृषमृगाङ्गनाः ।
सर्व्वाः परिणयेद्विप्रः क्षत्त्रियो नवभाग्भवेत् ।
तदाश्रयो भवेद्वैश्यः शूद्रे प्रकीर्त्तिताः ।
वर्णश्रेष्ठा च या नारी हीनवर्णश्च यः पुमान् ।
सदक्ष्यपि कुले जाता नाशी भर्त्तृ रज्यते ।"
इति ज्योतिस्तत्त्वम् । * ।
अन्यत् उद्वाहशब्दे द्रष्टव्यम् ।*।*। तत्प्रयोग यथा । अथ कन्यावृद्धिमाह: संप्रदाता वरसमये संप्रदानशालायां गत्वा उत्तरतः प्रागग्रौ वरा विष्टरादिकं सज्जीकृत्य पश्चिमाभिमुखोऽनुपविष्टस्तिष्ठेत् । ततोऽन्यत उपस्थिते वरे संप्रदाता कृताञ्जलिर्वरणं कुर्य्यात् । ॐ साधु भवानास्तामिति पृच्छेत् । जामाता ॐ साध्वहमासे इति वदेत् । संप्रदाता ॐ अर्च्चयिष्यामो भवन्तं इति पृच्छेत् । जामाता ॐ अर्च्चय इति वदेत् । ततः संप्रदाता पाद्यार्घ्याचमनीयगन्धमाल्यवस्त्राङ्गुरीयकमधुपर्कयज्ञोपवीतसपर्णपूगादिकं प्रदाय जामातरमर्च्चयेत् । ततः संप्रदाता दक्षिणं जानु धृत्वा ॐ अद्येत्यादि अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्रं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पौत्रं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पुत्रं अमुकगोत्रं अमुकप्रवरं अमुकदेवशर्म्माणं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पौत्रीं अमुकगोत्रस्यामुकप्रवरस्य अमुकदेवशर्म्मणः पुत्रीं अमुकगोत्रां अमुकप्रवरां श्रीअमुकीदेवीं एनां कन्यां शुभविवाहेन दातुं एभिः पाद्यादिभिः अभ्यर्च्य भवन्तमहं वृणे । जामाता ॐ वृतोऽस्मि इति वदेत् । संप्रदाता यथाविहितं विवाहकर्म्म कुरु । जामाता ॐ यथाज्ञानतः करवाणीति वदेत् । ततः स्त्र्याचारादिकं कारयित्वा मुखचन्द्रिकां कारयेत् । ततोऽग्रे उपस्थिते वरे संप्रदाता इमं मन्त्रं जपति । प्रजापतिऋषिरनुष्टुप्छन्दोऽर्हणीया गौर्देवता गवोपस्थापने विनियोगः । ॐ अर्हणा पुत्रवाससा धेनुरभवद्यमे सा नः पयस्वती दुहा उत्तरामुत्तरां समाम् । ततो जामाता प्रजापतिऋषिर्विराट्छन्दो विराड्देवता उपविष्टदर्भजपे विनियोगः । ॐ इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामि । इमं मन्त्रं जपन्नासने प्राङ्मुख उपविशति । ततः संप्रदातापि पश्चिमाभिमुख उपविशेत् । ततो दाता चाग्रपञ्चविंशतिकुशपत्रैः द्विर्नामाग्रोसुखग्रन्थिं रचितं

विष्टरं उत्तराग्रं उत्ताणहस्ताभ्यां गृहीत्वा ॐ विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामित्यादधानो विष्टरमर्पयति। जामाता च ॐ विष्टरं प्रतिगृह्णामि इति विष्टरं गृहीत्वा प्रजापतिर्ऋषिरनुष्टुप्छन्द ओषध्यो देवता विष्टरस्यासनदाने विनियोगः।

"ॐ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः।

ता मह्यमस्मिन्नासने अच्छिद्राः शर्म्म यच्छत॥"

इत्यासने विष्टरमुत्तराग्रं दत्त्वा उपविशति। ततः सम्प्रदाता पुनस्तादृशमेव विष्टरं गृहीत्वा ॐ विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामिति तथैव पुनरर्पयति। जामाता च ॐ विष्टरं प्रतिगृह्णामीति तथैव गृहीत्वा प्रजापतिर्ऋषिरनुष्टुप् छन्द ओषध्यो देवता विष्टरस्य पादयोरधस्ताद्दाने विनियोगः।

"ॐ या ओषधीः सोमराज्ञीर्व्विष्ठिताः पृथिवीमनु।

ता मह्यमस्मिन् पादयोरच्छिद्राः शर्म्म यच्छत॥"

इति पादयोरधस्तादुत्तराग्रं विष्टरं स्थापयेत्॥ ततः सम्प्रदाता पानीयपात्रं गृहीत्वा ॐ पाद्याः पाद्याः पाद्याः प्रतिगृह्यन्तामिति पानीयपात्रमर्पयति। जामाता ॐ पाद्यं प्रतिगृह्णामीति गृहीत्वा प्रजापतिर्ऋषिर्व्विराड्गायत्री छन्द आपो देवता पादप्रक्षालनार्थोदकवीक्षणे विनियोगः। ॐ यतो देवीः प्रतिपश्याम्यापस्ततो मा ऋद्धिरागच्छतु। अनेनोदकं वीक्षेत्। ततो जामाता तस्मात् पात्रादुदकं गृहीत्वा प्रजापतिर्ऋषिर्व्विराड्गायत्री छन्दः श्रीर्द्देवता सव्यपादप्रक्षालने विनियोग. ॐ सव्यं पादमवनेनिजे अस्मिन् राष्ट्रे श्रियं दधे। अनेन वामपादे उदकाञ्जलिं दद्यात्। ततोऽपरमञ्जलिं गृहीत्वा प्रजापतिर्ऋषिर्व्विराड्गायत्री छन्दः श्रीर्द्देवता दक्षिणपादप्रक्षालने विनियोगः। ॐ दक्षिणं पादमवनेनिजे अस्मिन् राष्ट्रे श्रियमावेशयामि। अनेन दक्षिणपादे उदकाञ्जलिं दद्यात्। ततः पुनरुदकाञ्जलिं गृहीत्वा प्रजापतिर्ऋषिर्व्विराड्गायत्री छन्दः श्रीर्द्देवता उभयपादप्रक्षालने विनियोगः। ॐ पूर्व्वमन्यमपरमन्यमुभौ पादाववनेनिजे राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै। अनेन पादद्वये उदकाञ्जलिं दद्यात्। ततः सम्प्रदाता साक्षतदूर्व्वापल्लवान् शङ्खादिपात्रे निधाय। ॐ अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यताम्। इत्यभिधायार्घ्यमर्पयति। जामाता च ॐ अर्घ्यं प्रतिगृह्णामीति गृहीत्वा प्रजापतिर्ऋषिरर्घ्यं देवता अर्घ्यप्रतिग्रहणे विनियोगः। ॐ अन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासम्। अनेनार्घ्यं शिरसि दद्यात्। ततः सम्प्रदाता उदकपात्रं गृहीत्वा। ॐ आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यतां इत्युदकपात्रमर्पयति। जामाता च ॐ आचमनीयं प्रतिगृह्णामीति गृहीत्वा प्रजापतिर्ऋषिराचमनीयं देवता आचमनीयाचमने विनियोगः। ॐ यशोऽसि यशो मयि धेहि। अनेनोत्तराभिमुखीभूयाचामेत्। ततः सम्प्रदाता घृतदधिमधुयुक्तं कांस्यपात्रं कांस्यपात्रान्तरेणापिधाय गृहीत्वा ॐ मधुपर्क्को मधुपर्क्को मधुपर्क्कः प्रति गृह्यतामिति मधुपर्क्कं समर्पयति। जामाता च ॐ मधुपर्क्कं प्रतिगृह्णामीति गृहीत्वा प्रजापतिर्ऋषिर्म्मधुपर्क्को देवता अर्हणीयमधुपर्क्कग्रहणे विनियोगः। ॐ यशसो यशोऽसि। अनेन मधुपर्क्कं गृहीत्वा भूमौ निधाय प्रजापतिर्ऋषिर्म्मधुपर्क्को देवता अर्हणीयमधुपर्क्कप्राशने विनियोगः। ॐ यशसो भक्ष्योऽसि महसो भक्ष्योऽसि श्रीर्भक्ष्योऽसि श्रियं मयि धेहि। अनेन मन्त्रेण वारत्रयं भक्षयित्वा सकृत् तूष्णीं भक्षयेत्। ततो जामाता आचान्तो मङ्गलौषधियुक्तेन दक्षिणहस्तेन ताडृशमेव कन्याया दक्षिणहस्तं स्वहस्तोपरि निदध्यात्। ततः सौभाग्यपतिपुत्त्रवती नारी मङ्गलपूर्व्वकं कुशेन हस्तद्वयं वध्नाति। ततः सम्प्रदाता तिलकुशसहितमुदकपात्रं गृहीत्वा वामहस्तेनार्च्चितां कन्यां धृत्वा ओमद्यामुके मासि अमुकराशिस्थे भास्करे अमुके पक्षे अमुकतिथौ अमुकगोत्रः श्रीअमुकदेवशर्म्मा अमुककामः अमुकगोत्रस्यामुकप्रवरस्य अमुकदेवशर्म्मणः प्रपौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पौत्राय अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पुत्राय अमुकगोत्राय अमुकप्रवराय श्रीअमुकदेवशर्म्मणे ब्राह्मणाय वराय अर्च्चिताय अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः प्रपौत्रीं अमुकगोत्रस्यामुकप्रवरस्यामुकदेवशर्म्मणः पौत्रीं अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पुत्रीं अमुकगोत्रां अमुकप्रवरां श्रीअमुकीदेवीं इति त्रिरुच्चार्य्य एनां कन्यां सवस्त्रालङ्कृतां प्रजापतिदेवताकां तुभ्यमहं सम्प्रददे। इति हस्तद्वयोपरि सतिलजलकुशानर्पयति। जामाता ॐ स्वस्तीत्यभिधाय कन्येयं प्रजापतिदेवताका इति वदेत्। गायत्रीं कामस्तुतिञ्च पठेत्। ॐ क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते।*। ततः ॐ अद्येत्यादि कृतैतत्कन्यादानकर्म्मणः साङ्गतार्थं दक्षिणामेतत् सुवर्णं अमुकगोत्रायामुकदेवशर्म्मणे ब्राह्मणाय वराय तुभ्यमहं सम्प्रददे। ततो जामाता ॐ स्वस्तीति वदेत्। ततः पतिपुत्त्रवती नारी दाम्पत्योर्व्वस्त्रेण ग्रन्थिं वध्नाति। ततः कृतग्रन्थिं मुक्त्वा वस्त्रेणाच्छादितान्योन्यावलोकनं कारयेत्। ततो भर्त्तुर्द्दक्षिणपार्श्वे वधूमुपवेशयेत्। ततो नापितेन गौर्गौरित्युक्ते जामाता पठति। प्रजापतिर्ऋषिर्बृहती छन्दो गौर्द्देवता पूर्व्वबद्धगवीमोक्षणे विनियोगः। ॐ मुञ्च गां वरुणपाशाद्द्विषन्तं मेऽभिधेहि तं जह्यमुष्य चोभयोरुत्सृज गामत्तु तृणानि पिबतूदकम्। इति पठेत्। ततो नापितेन मुक्तायां गवि जामाता पठति। प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो गौर्द्देवता गवानुमन्त्रणे विनियोगः। ॐ माता रुद्राणां दुहिता वसूनां स्वसादित्यानां अमृतस्य नाभिः प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। अनेन गां विसर्ज्जयेत्। ततो मङ्गलं कुर्य्यात्। ततो भर्त्तुर्व्वामपार्श्वे वधूमुपवेशयेत्। इति सम्प्रदानं समाप्तम्॥*॥ इति भवदेवभट्टः॥

**विवाहितः**, पुं स्त्री, (वि + वह + णिच् + क्तः।) कृतविवाहः। यथा,—

"शनैश्चरदिने चैव यदि रिक्ता तिथिर्भवेत्।

तस्मिन् विवाहिता कन्या पतिसन्तानवर्ज्जिता॥"

अपि च।

"विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने यमे।

एभिर्व्विवाहिता कन्या नित्यमेव सुदुःखिता॥"

इति ज्योतिस्तत्त्वम्॥

**विवाह्यः**, पुं, (वि + वह + णिच् + यत्।) जामाता। इति केचित्॥ विवाहयोग्ये, त्रि॥ (यथा, कथासरित्सागरे। ३३। १६०।

"पद्मावत्या कृते राज्ञा न विवाह्यापरेति यत्।

प्रोक्तं देवि प्रतिज्ञातं मया निर्व्यूढमद्य तत्॥")

**विविक्तं**, त्रि, (वि + विच + क्तः।) पवित्रम्। विजनम्। इत्यमरः॥ (यथा, गीतायाम्।१३।१०।

"विविक्तदेशसेवित्वमरतिर्ज्जनसंसदि॥")

असम्पृक्तः। (यथा, माघे। ११। १७।

"पुनरयमि विविक्तेर्म्मातरिश्वावकृष्यं ज्वलयति मदनाग्निं मालतीनां रजोभिः॥")

विवेकी। इति मेदिनी॥

**विविक्ता**, स्त्री, दुर्भगा। इति त्रिकाण्डशेषः॥ मुद्राङ्कितपुस्तके विरिक्ता इति पाठः॥

**विविधं**, त्रि, नानाप्रकारम्। इत्यमरः॥ (यथा, कौतुकसर्व्वस्वे। २।

"कृतं विविधदुष्कृतं सततमेव प्रभूहतः॥")

**विवीतः**, पुं, भूमिविशेषः। यथा,—

"समन्तेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्।

विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परिगृहीतो भूप्रदेशः तदुपघातेऽपीतरक्षेत्रवत् दण्डं एषां महिष्यादीनां विद्यात्। इति मिताक्षरायां स्वामिपालविवादप्रकरणम्॥

**विवीतभर्त्ता**, [ऋ] पुं, विवीतभूस्वामी। इति मिताक्षरा॥

**विवृत्ता**, स्त्री, (वि + वृत + क्तः। स्त्रियां टाप्।) दुर्भगा। इति भूरिप्रयोगः॥

**विवृतं**, त्रि, (वि + वृ + क्तः।) विस्तृतम्। इति मेदिनी। (यथा, शाकुन्तले १ अङ्के।

"दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा॥"

वर्णोच्चारणे प्रयत्नविशेषः। यथा, सिद्धान्तकौमुद्याम्। १। १। ६। "स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्।" "विवृतमूष्मणां स्वराणाञ्च। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशायान्तु विवृतमेव॥")

विवृता, स्त्री, क्षुद्ररोगभेदः। इति मेदिनी। तल्लक्षणं यथा,—
"विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्।
विवृतामिति तां विद्यात् पित्तोत्थां परिमण्ड-
लाम्॥"
परितः शोथवतीम्॥ *। अस्याश्चिकित्सा।
"विवृतामिन्द्रवृद्धाञ्च गर्द्दभीं जालगर्द्दभम्।
पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक्।
पाके तु रोपयेदाज्यैः पक्वैर्म्मधुरभेषजैः॥"
इति भावप्रकाशः॥
( विवृत्तेति क्वचित् पाठः॥ )

विवृताक्षः, पुं, (विवृते अक्षिणी यस्य।) कुक्कुटः। इति हेमचन्द्रः॥

विवृतिः, स्त्री, व्याख्या। विपूर्व्ववृधातोः क्तिप्रत्ययेन निष्पन्नमिदम्। विवरणम्। यथा,—
"शक्तिग्रहं व्याकरणोपमान-
कोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषात् विवृतेर्व्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः॥"
इति मलमासतत्त्वम्॥

विवृत्तं, त्रि, ( वि+वृत्+क्तः। ) चलितम्। यथा,—
"विवृत्तपार्श्वं रुचिराङ्गहारं
समुद्वहच्चारु नितम्बरम्यम्।
आमन्द्रमन्थध्वनिदत्ततालं
गोपाङ्गनानृत्यमनन्दयत्तम्॥"
इति भट्टिः॥
विवृत्तं तिर्य्यक्चलितं पार्श्वं यत्र। इति तट्टीका॥

विवृत्तिः, स्त्री, चक्रवद्भ्रमणम्। घूर्णनम्। विपूर्व्ववृतधातोः क्तिप्रत्ययेन निष्पन्नमिदम्॥ (विविधवृत्तिः। यथा, भागवतटीकायां श्रीधरः।३।६।१०।
"विश्वसृजां विवृत्तये विविधवृत्तिलाभाय॥" )

विवेकः, पुं, परस्परव्यावृत्तया वस्तुस्वरूपनिश्चयः। प्रकृतिपुरुषयोर्विभागेन ज्ञानं इत्यन्ये। इति भरतः॥ तत्पर्य्यायः। पृथगात्मता २। इत्यमरः॥ विवेचनम् ३। इति शब्दरत्नावली॥ पृथग्भावः ४। इति धरणिः॥
"विवेको वस्तुनो भेदः प्रकृतेः पुरुषस्य वा॥"
इति जटाधरः॥
यथा। नित्यानित्यवस्तुविवेकस्तावत् ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलमनित्यमिति विवेचनम्। इति वेदान्तसारः॥ ( यथा, मनौ। १। २६।
"कर्म्मणाञ्च विवेकार्थं धर्म्माधर्म्मौ व्यवेचयत्॥")
जलद्रोणी। विचारः। इति मेदिनी॥ ( यथा, मनौ। १। ११२।
"तस्य कर्म्मविवेकार्थं शेषाणामनुपूर्व्वशः॥")

विवेकिता, स्त्री, (विवेकिन्+तल्।) विवेकित्वम्। विवेकिनो भावः। यथा,—
"यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।
एकैकमप्यनर्थाय किमु तत्र चतुष्टयम्॥"
इति हितोपदेशः॥
( यथा, याज्ञवल्क्ये। ३। १५६।
"आचार्य्योपासनं वेदशास्त्रार्थेषु विवेकिता॥")

विवेकी, [न्] पुं, ( विवेकोऽस्यास्तीति। विवेक+इनिः। ) देवसेनराजपुत्रः। यथा,—
"देवसेनोऽपि कैशिन्यां जनयामास पुत्रकान्।
सप्त श्रृणुत तान् यूयं नामतः कीर्त्तितांस्तथा॥
सुमना वसुदानश्च ख्यातभगयवः क्रतौ।
नीलो विवेकोऽथेति वै सर्व्वशास्त्रविशारदाः॥"
इति कालिकापुराणे भैरववंशानुकीर्त्तने ९० अध्यायः॥ विचारकर्त्ता। इति मेदिन्यां विवेकशब्दार्थदर्शनात्॥ विवेकविशिष्टे, त्रि॥ (यथा, मार्कण्डेये। ६६। ३४।
"इष्टादृष्टांस्तथा भोगान् वाञ्छमाना विवे-
किनः।
दानानि च प्रयच्छन्ति पूर्त्तधर्म्मांश्च कुर्व्वते॥")

विवेचकः, पुं, ( वि+विच्+ण्वुल्। ) विवेचनकर्त्ता। विवेचयति य इत्यर्थे णकप्रत्ययेन निष्पन्नमिदम्॥

विवेचनं, क्ली, ( वि+विच्+ल्युट्। ) विवेकः। इति शब्दरत्नावली॥ (यथा, हरिवंशे भविष्यपर्व्वणि। ४३। १८।
"विवद्भिर्गीयसे विष्णो त्वमेव जगतीपते।
इच्छया सर्व्वमाप्नोषि इष्टादृष्टविवेचनम्॥")*॥
निर्णयः। यथा, मनुः। ८। २१।
"यस्य शूद्रस्तु कुरुते राज्ञो धर्म्मविवेचनम्।
तस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः॥" )

विवेचनीयः, त्रि, विवेच्यः। विवेचितव्यः। इति विपूर्व्वविचधातोरनीयप्रत्ययेन निष्पन्नमिदम्॥

विब्रुवन्, [त्] त्रि, ( वि+ब्रू+शतृ। ) विरुद्धवक्ता। यथा,—
"यो न भ्राता पिता वापि न पुत्रो न नियो-
जितः।
परार्थवादी दण्ड्यः स्यात् व्यवहारेषु विब्रुवन्॥"
विब्रुवन् विरुद्धं ब्रुवन्। इति व्यवहारतत्त्वम्॥

विवोढा, [ ऋ ] पुं, ( वि+वह+तृच्। ) वरः। पतिः। इति हेमचन्द्रः॥

विव्वोकः, पुं, स्त्रीणां शृङ्गारभावजा क्रिया। इत्यमरः॥ अभिमतवस्तुप्राप्तावपि गर्व्वादनादरः सापराधस्य च संयमनं ताडनञ्च विव्वोकः। यदुक्तम्।
"गर्व्वाभिमानादिष्टेऽपि विव्वोकोऽनादरक्रिया।"
तथा।
"अभिमतवस्तूपनतावपि गुरुगर्व्वादनादर-
स्तन्व्याः।
स्खलति प्रियस्य हृदयं संयमताडनमयन्तु
विव्वोकः॥"
इति भरतः॥
"विव्वोकस्त्वतिगर्व्वेण वस्तुनीष्टेऽप्यनादरः।
न स्वराहर्षवागादेर्दयितागमनादिषु॥"
इति सारसुन्दरी॥
"इष्टेऽपि गर्व्वमानाभ्यां विव्वोकः स्यादनादरः॥"
इत्युज्ज्वलनीलमणिः॥

विश, श्री श प्रवेशे। इति कविकल्पद्रुमः॥ ( तुदा०-पर०-सक०-अनिट्। ) श, विशति। श्री, अविक्षत्। विवेश कश्चिज्जटिलस्तपोवनम्। विपराभ्यामुपसर्गस्थौ निविशः (?) आत्मनेपदविधानेऽपि भर्त्तरङ्के निविशती भयादिति रघौ। केवलात् शतृप्रत्ययं विधाय पश्चादुपसर्गयोगादिति दुर्घटवृत्तिः। निशब्द इह उपसर्गप्रतिरूपको वा। यस्माद्विश्वमिदं सर्व्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्व्विशधातोः प्रवेशनादिति पुराणे विष्णुशब्दव्युत्पादनात् मूर्द्धन्यान्तोऽयमिति केचित् तच्चिन्त्यम्। तालव्यान्तस्यैव सर्व्वसम्मतत्वात्। इति दुर्गादासः॥

विशं, क्ली, ( विश+कः। ) मृणालम्। इत्यमरटीकायां रायमुकुटः॥ ( तत्पर्य्यायो यथा,—
"पद्मनालं मृणालं स्यात्तथाबिशमिति स्मृतम्।"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

विशंवरा, स्त्री, ( विशं मनुष्यं वृणोतीति। वृ+अच्। अभिधानात् द्वितीयाया अलुक्। ) पत्नी। इति राजनिर्घण्टः॥

विशकण्ठी, स्त्री, ( विशमिव कण्ठो यस्याः। विशकण्ठ+ङीष्। ) बलाका। इति राजनिर्घण्टः॥

विशङ्कः, त्रि, विगता शङ्का यस्य बहुव्रीहिः। शङ्कारहितः। ( यथा, रघुः। २। ११।
"धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्व्विशङ्कैः॥")

विशङ्कटः, त्रि, ( वि+"वेः शालच्छङ्कटचौ।" ५। २। २८। इति शङ्कटच्। ) विशालः। इत्यमरः॥ ( यथा, भट्टिः। २। ५०।
"विशङ्कटो वक्षसि बाणपाणिः
सम्पन्नतालद्वयसः पुरस्तात्॥"
भयानकः। यथा, कथासरित्सागरे।१०८।१०७।
"मांसावकृत्तवेतालतालवाद्यविशङ्कटः।
अभूत्तद्व्यक्तबन्धोऽसौ भूतप्रौढो रणोत्सवः॥")

विशदः, पुं, ( वि+शद्+अच्। ) श्वेतवर्णः। इत्यमरः॥ ( जयद्रथपुत्रः। यथा, भागवते। ९। २१। ०३।
"बृहत्कायस्तनस्तस्य पुत्र आसीज्जयद्रथः।
ततसुतो विशदस्तस्य स्येनजित् समजायत॥")

विशदः, त्रि, ( वि+शद्+अच्। ) विमलः। इति हेमचन्द्रः॥ ( यथा, रघुः। ४। १८।
"प्रसादसुमुखे तस्मिन् चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः॥")
व्यक्तः। इति मेदिनी॥ ( यथा, रघुः। ८। ३।
"विशदोच्छ्वसितेन मेदिनी
कथयामास कृतार्थतामिव॥")
शुक्लगुणयुक्तः। इत्यमरः॥ ( उज्ज्वलः। यथा, माघे। ८। ७०।
"स्वच्छाम्भःस्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम्।
वासश्च प्रतनु विविक्तमस्त्वितीया-
नाकल्पो यदि कुसुमेषुणा न शून्यः॥")

विशयः, पुं, (वि+शी+अच् ।) संशयः । यथा,
"विषयो विशयश्चैव पूर्व्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥"
विषयो विचारार्हवाक्यम् । विशयोऽस्यायमर्थो न वा इति संशयः । इति तिथ्यादितत्त्वम् ॥
आश्रयः । इति केचित् ॥

विशयी, [न्] त्रि, (विशयोऽस्त्यस्येति । विशय+इनिः ।) संशयी । इति विशयशब्दार्थदर्शनात् ॥

विशरः, पुं, (वि+शॄ हिंसायाम्+अप् ।) वधः । इत्यमरः ॥

विशरणं, क्ली, (वि+शॄ+ल्युट् ।) मारणम् । इति हेमचन्द्रः ॥

विशल्यः, त्रि, (विगतं शल्यं यस्मात् ।) शल्यरहितः । यथा,—
"सशल्यः स समाघ्राय लक्ष्मणः परवीरहा ।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥"
इति श्रीरामायणे युद्धकाण्डे १०२ सर्गः ॥

विशल्यकरणी, स्त्री, (विशल्यं क्रियतेऽनयेति । विशल्य+कृ+ल्युट् । ङीप् ।) औषधिविशेषः । यथा,—
"पूर्व्वन्तु कथितो योऽसौ वीर जाम्बवता तव ।
दक्षिणे शिखरे जाता महौषधिमिहानय ॥
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
संजीवकरणीं वीर सन्धानीञ्च महौषधीम् ॥"
इति रामायणे वाल्मीकीये युद्धकाण्डे १०१ सर्गः ॥

विशल्यकृत्, पुं, (विशल्यं नष्टप्रहारजन्यवेदनादिनाशं करोतीति । कृ+क्विप् ।) विशालीवृक्षः । हापरमालीति ख्यातः । तत्पर्य्यायः । अपोहकः २ सुकाण्डः ३ भूपलाशः ४ । इति रत्नमाला ॥ आस्फोतः ५ आचरन्प्रियः ६ । इति शब्दचन्द्रिका । विशल्यकारिणि, त्रि ॥

विशल्या, स्त्री, (विगतं शल्यजन्यप्रहारादिजनितवेदनादिनाशो यया ।) गुडूची । (अस्याः पर्य्यायो यथा,—
"गुडूची मधुपर्णी स्यादमृतामृतवल्लरी ।
छिन्ना छिन्नरुहा छिन्नोद्भवा वत्सादनीति च ॥
जीवन्ती तन्त्रिका सोमा सोमवल्ली च कुण्डली ।
चक्रलक्षणिका धीरा विशल्या च रसायनी ॥
चन्द्रहासो वयःस्था च मण्डली देवनिर्म्मिता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे ॥)
अग्निशिखावृक्षः । (अस्याः पर्य्यायो यथा,—
"कलिहारी तु हलिनी लाङ्गली शक्रपुष्प्यपि ।
विशल्याग्निशिखानन्ता वह्निवक्त्रा च गर्भनुत् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे १ भागे ॥)
दन्ती । इत्यमरः ॥ (अस्याः पर्य्यायो यथा,—
"नागदन्ती विशल्या च स्यादुदुम्बरपर्ण्यपि ।
तथैरण्डफला शीघ्रा श्येनघण्टाघुणप्रिया ॥
वाराहाङ्गी च कथिता निकुम्भश्च मकूलकः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
त्रिपुटा । इति मेदिनी ॥ कलिकारी । अजमोदा । इति राजनिर्घण्टः ॥ (नदीविशेषः । यथा, महाभारते । २ । ६ । २० ।
"किम्पुना च विशल्या च तथा वैतरणी नदी ॥")

विशसनं, क्ली, (वि+शस हिंसायाम्+ल्युट् ।) मारणम् । इत्यमरः ॥ (यथा, हरिवंशे । ६६ । ४३ ।
"तस्मिन् विशसने घोरे चक्रलाङ्गलसंप्लवे ।
दारुणानि प्रवृत्तानि रक्तस्यौत्पातिकानि च ॥"
नरकविशेषः । यथा, भागवते । ५ । २६ । ७ ।
"प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति ॥"*॥ विनाशकारिणि, त्रि । यथा, महाभारते । ६ । ५६ । ६० ।
"यमदण्डोपमां गुर्व्वीमिन्द्राशनिसमस्वनाम् ।
अपश्याम महाराज रौद्रीं विशसनीं गदाम् ॥")

विशसनः, पुं, (विशसति छिनत्तीति । वि+शस हिंसायाम्+ल्युः ।) खड्गः । इति त्रिकाण्डशेषः ॥ (यथा, महाभारते । १२ । १६६ । ८३—८४ ।
"असिरष्टौ हि नामानि रहस्यानि निबोध मे ।
पाण्डवेय सदा यानि कीर्त्तयन् लभते जयम् ॥
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्म्मपालस्तथैव च ॥")

विशसितः, त्रि, मारितः । विपूर्व्वशसधातोः क्तप्रत्ययेन निष्पन्नः । इति सिद्धान्तकौमुदी ॥

विशस्तः, त्रि, अविनीतः । धृषिशसी वैयात्ये । एतौ निष्ठायामनिटौ स्तः । धृष्टो विशस्तः । अन्यत्र धर्षितः । विशसितः । इति सिद्धान्तकौमुदी ॥

विशस्ता, [ ऋ ] पुं, (वि+शस हिंसायाम्+तृच् ।) चाण्डालः । इति संक्षिप्तसारोणादिवृत्तिः ॥ (हिंसाकारके, त्रि । यथा, महाभारते । १२ । ११५ । ४६ ।
"आहर्त्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्त्ता चोपभोक्ता च खादकः सर्व्व एव ते ॥"
पापिन इति शेषः ॥)

विशाकरः, पुं, भद्रचूडः । इति शब्दचन्द्रिका ॥ लक्कासिज् इति भाषा ॥

विशाखः, पुं, कार्त्तिकेयः । इत्यमरः ॥ (यथा, महाभारते । ३ । २३१ । ७ ।
"प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ॥")
धन्विनां वितस्त्यन्तरेण पादसंस्थानम् । इति भरतः ॥ याचकः । इति मेदिनीकरहेमचन्द्रौ ॥ पुनर्नवा । इति राजनिर्घण्टः ॥ (विगता शाखा यस्य । शाखाविहीने, त्रि । यथा, हरिवंशे । ४८ । ५२ ।
"कबन्धोऽवस्थितः संख्ये विशाख इव पादपः ॥")

विशाखजः, पुं, नारङ्गः । इति शब्दचन्द्रिका ॥ विशाखजाते, त्रि ॥

विशाखलं, क्ली, युद्धकाले मध्ये विन्यस्तपादद्वयम् । यथा,—
"विशाखान्तरविन्यस्ते पादयुग्मे विशाखलम् ॥"
इति शब्दमाला ॥

विशाखा, स्त्री, कठिल्लकः । इति मेदिनी ॥ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतषोडशनक्षत्रम् । तत्पर्य्यायः । राधा २ । इत्यमरः ॥ "विशाखे द्वे ।
'पत्नीमध्यगतस्तत्र सुग्रीवः प्लवगेश्वरः ।
विशाखयोर्मध्यगतः संपूर्ण इव चन्द्रमाः ॥'
इति रामायणम् ॥
अतएव द्वित्वमुचितं किन्तु एकताराऽपेक्षया एकवचननिर्द्देशोक्तम् ॥" इति भरतः ॥ तस्याः रूपं तोरणाकारचतुस्तारामयम् । इति मुहूर्त्तचिन्तामणिः ॥
"तोरणाकृतिनि पञ्चतारके
तारकेशवदने विशाखभे ।
सन्ति यानि विबुधाध्वमध्यगे
कुम्भतो रसभुजाः कलाः प्रिये ॥"
इं । ०।२६ । इति कालिदासकृतरात्रिलग्ननिरूपकग्रन्थः ॥ अस्या अधिदेवते शक्राग्नी । इयं मिश्रगणान्तर्गता । इति ज्योतिस्तत्त्वम् ॥*॥ तत्र जातफलम् ।
"सदातुरक्तो विविधक्रियायां
सुवर्णकारैरपि सख्यमेति ।
यस्य प्रसूतौ च भवेत् विशाखा
सखा न कस्यापि भवेत् प्रसूतः ॥"
इति कोष्ठीप्रदीपः ॥

विशातनः, त्रि, (वि+शत+णिच्+ल्युः ।) मोचनकर्त्ता । (यथा, महाभारते । ७ । ८१ । १८ ।
"नमस्ते देवदेवेश सनातन विशातन ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥")
यथा च ।
"साधु वीर त्वया पृष्टमवतारकथा हरेः ।
यत्त्वं पृच्छसि मर्त्त्यानां मृत्युपाशविशातनीम् ॥"
इति श्रीभागवते ३ स्कन्धे १४ अध्यायः ॥
"मृत्योः पाशं विशातयति मोचयतीति तथा ।"
इति तट्टीकायां श्रीधरस्वामी ॥ (वि+शत+णिच्+ल्युट् । पातने, क्ली । यथा, महाभारते । ७ । १२ । १६ ।
"यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥")

विशायः, पुं (वि+शी+"व्युपयोः शेतेः पर्य्याये ।" ३ । ३ । ३६ । इति घञ् ।) प्रहरिकादीनां क्रमेण शयनम् । यथा, अमरे ।
"उपशायो विशायश्च पर्य्यायशयनार्थकौ ॥"

विशारणं, क्ली, (वि+शॄ+णिच्+ल्युट् ।) मारणम् । इति हेमचन्द्रः ॥

विशारदः, त्रि, विद्वान् । (यथा, मनुः । ७ । ६३ ।
"दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ॥")
प्रगल्भः । इत्यमरः ॥ प्रसिद्धः । इति हारावली ॥ श्रेष्ठः । इति जयपालः ॥ वकुले, पुं । इति राजनिर्घण्टः ॥

विशारदा, स्त्री, क्षुद्रदुरालभा । इति राजनिर्घण्टः ॥

विशालः, त्रि, (वि+"वेः शालच्छङ्कटचौ ।" इति शालच् । यद्वा, विश प्रवेशने+"तमिविशि-

ह्रीं ॥ * ॥ त्रिपुराबा: । ह्सरैं । ह्सकलरीं । ह्सरौः ॥ * ॥ सम्पत्प्रदाभैरव्या: । ह्सरैं । ह्सकलरीं । ह्सरौं ॥ * ॥ कौलेशभैरव्या: । सहरैं । सहकलरीं । सहरौं ॥ * ॥ भयविध्वंसिनीभैरव्या: । ह्सैं । ह्सकलरीं । ह्सौं ॥ * ॥ सकलसिद्धिदाभैरव्या: । सहैं । सहकलरीं । सहौं ॥ * ॥ चैतन्यभैरव्या: । सहैं । सकलह्रीं । सहरौः ॥ * ॥ कामेश्वरीभैरव्या: । सहैं । सकलह्रीं । नित्यक्लिन्ने मदद्रवे सहरौः । षट्कूटाभैरव्या: । डरलकसहैं । डरलकसहीं । डरलकसहौं ॥ * ॥ नित्याभैरव्या: । ह्सकलरडैं । ह्सकलरडीं । ह्सकलरडौं ॥ * ॥ रुद्रभैरव्या: । ह्सखफ्रैं । ह्सकलरीं । ह्सौः ॥ * ॥ भुवनेश्वरीभैरव्या: । ह्सैं । ह्सकलह्रीं । ह्सौः ॥ * ॥ सकलेश्वर्य्या: । सहैं । सहकलह्रीं । सहौः ॥ * ॥ त्रिपुराबालाया: । ऐं क्लीं सौः ॥ * ॥ नवकूटाबालाया: । ऐं क्लीं सौः । ह्सैं । ह्सकलरीं । ह्सौः । ह्सरैं ह्सकलरीं ह्सरौः ॥ * ॥ अन्नपूर्णाभैरव्या । ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥ * ॥ श्रीविद्याया: । कएईल ह्रीं । हसकहल ह्रीं । सकल ह्रीं ॥ * ॥ छिन्नमस्ताया: । श्रीं क्लीं ह्रूं ऐं वज्रवैरोचनीये हूं हूं फट् स्वाहा ॥ * ॥ श्यामाया: । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं दक्षिणे कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ गुह्यकालिकाया: । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं गुह्ये कालिके क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ भद्रकाल्या: । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं भद्रकाल्यै क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ श्मशानकालिकाया: । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं श्मशानकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ महाकाल्या: । क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं महाकालि क्रीं क्रीं क्रीं हूं हूं ह्रीं ह्रीं स्वाहा ॥ * ॥ ताराया: । ह्रीं स्त्रीं हूं फट् ॥ * ॥ चण्डोग्रशूलपाणे: । ॐ ह्रीं हूं शिवाय फट् ॥ * ॥ मातङ्गिन्या: । ॐ ह्रीं क्लीं हूं मातङ्गिन्यै फट् स्वाहा ॥ * ॥ उच्छिष्टचाण्डालिन्या: । उच्छिष्टचाण्डालिनी सुमुखीदेवी महापिशाचिनी ह्रीं ठः ठः ठः ॥ * ॥ धूमावत्या: । धूं धूं स्वाहा ॥ * ॥ भद्रकाल्या: । ह्रौं कालि महाकालि किलि किलि फट् स्वाहा ॥ * ॥ उच्छिष्टगणेशस्य । ॐ हस्तिपिशाचि लिखे स्वाहा ॥ * ॥ धनदाया: । धं ह्रीं श्रीं देवि रतिप्रिये स्वाहा ॥ * ॥ श्मशानकालिकाया: । ऐं ह्रीं श्रीं क्लीं कालिके ऐं ह्रीं श्रीं क्लीं ॥ * ॥ बगलाया: । ॐ ह्लीं बगलामुखि सर्व्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय कीलय बुद्धिं नाशय ह्लीं ॐ स्वाहा ॥ * ॥ कर्णपिशाच्या: । ॐ कर्णपिशाचि वदातीतानागतशब्दं ह्रीं स्वाहा ॥ * ॥ मञ्जुघोषस्य । क्लीं, ह्रीं श्रीं ॥ * ॥ तारिण्या: । स्त्रीं क्लीं क्षणदेवि ह्रीं क्लीं ऐं ॥ * ॥ सारस्वतवीजम् । ऐं ॥ * ॥ कात्यायन्या: । ऐं ह्रीं श्रीं चौं चण्डिकायै नम: ॥ * ॥ दुर्गाया: । दूं ॥ * ॥ विशालाक्ष्या: । ॐ ह्रीं विशालाक्ष्यै नम: ॥ * ॥ गौर्य्या: । ह्रीं गौरि रुद्रदयिते योगेश्वरि हूं फट् स्वाहा ॥ * ॥ ब्रह्मश्रीमन्त्र: । ह्रीं नमो ब्रह्मश्रीराजिते राजपूजिते जये विजये गौरि गान्धारि त्रिभुवनशङ्करि सर्व्वलोकवशङ्करि सर्व्वस्त्रीपुरुषवशङ्करि सुदुह सुदुघेवावे ह्रीं स्वाहा ॥ * ॥ इन्द्रस्य । इं इन्द्राय नम: ॥ * ॥ गरुडस्य । क्षिप ॐ स्वाहा ॥ * ॥ विषहराग्निवीजम् । स्व: स्वं ॥ * ॥ वृश्चिकविषहरवीजम् । ॐ मरह स्फु: । ॐ ह्रिलि ह्रिमि चिलि हस्फु: । ॐ ह्रिलि ह्रिलि चिलि चिलि स्फु: । ब्रह्मणि फु: । सर्व्वेभ्यो देवेभ्यस्फु: ॥ * ॥ मूषिकविषहरवीजम् । ॐ गें फें ठं । आगमचन्द्रिकायां ॐ गं गां ठ: ॥ * ॥ मूषिकनाशमन्त्र: । ॐ मरणी फु: अमरणी फु: विमरणी फु: । एतन्मन्त्रं जपन् श्वेतसर्षपप्रक्षेपात् मूषिकनाशो भवति ॥ * ॥ लूताविषहरमन्त्र: । ॐ ह्रीं ह्रीं हूं अञ्जन ॐ स्वाहा गरुड हूं फट् ॥ * ॥ सर्व्वकीटविषहरवीजम् । ॐ नमो भगवते विष्णवे सर सर हन हन हुं फट् स्वाहा ॥ * ॥ सुखप्रसवमन्त्र: । ॐ मन्मथ मन्मथ वाहि वाहि लम्बोदर मुञ्च मुञ्च स्वाहा । ॐ मुक्ता: पाशा विपाशाश्च मुक्ता: सूर्य्येण रश्मय: । मुक्त: सर्व्वभयाद्गर्भ एह्येहि मारीच मारीच स्वाहा । एतयोरन्यतरेणाष्टवारं जलमभिमन्त्र्य देयं पीत्वा सुखप्रसवा भवति ॥ * ॥ हनुमत: । हं हनुमते रुद्रात्मकाय हुं फट् ॥ * ॥ वीरसाधनस्य । हं पवननन्दनाय स्वाहा ॥ * ॥ अथ आर्द्रपटी । ॐ नमो भगवति चामुण्डे रक्तवाससे अप्रतिहतरूपपराक्रमे अमुकवधाय विजेतसे स्वाहा । आर्द्ररक्तपटेनावृत: समुद्रगामिनीनदीतटे ऊषरभूमौ वा दक्षिणामुख ऊर्द्धबाहुर्जपेत् । यावत् पट: शुष्यति तावत् प्राणा: शुष्यन्ति शत्रो: ॥ * ॥ श्मशानभैरव्या: । श्मशानभैरवि नररुधिरास्थिवसाभक्षिणि सिद्धिं मे देहि मम मनोरथान् पूरय हुं फट् स्वाहा ॥ * ॥ ज्वालामालिन्या: । ॐ नमो भगवति ज्वालामालिनि गृध्रगणपरिवृते हुं फट् स्वाहा ॥ * ॥ महाकाल्या: । ॐ फ्रें फ्रें क्रीं क्रीं पशून् गृहाण हुं फट् स्वाहा ॥ * ॥ अथ निगडबन्धनमोचनस्य । ॐ नम ऋते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतं यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयेमम् ॥ * ॥ अथ चिटिमन्त्र: । ॐ चिटि चिटि चाण्डालि महाचाण्डालि अमुकं मे वशमानय स्वाहा ॥ * ॥ त्र्यम्बकस्य ।

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनात् मृत्योर्म्मुक्षीय मामृतात् ॥
अथ मृतसञ्जीवनीमन्त्र: । ह्रौं ॐ जुं स: ॐ भूर्भुव: स्व: ।
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ।
उर्व्वारुकमिव बन्धनात् मृत्योर्म्मुक्षीय मामृतात् ॥
ॐ भूर्भुव: स्व: । इत्यादि तन्त्रसार: ॥ आकर्षणादिवीजानि बाहुल्यभयान्नोक्तानि ॥ * ॥
(अथ वीजाभिधानम् । यथा,
"वीजमन्त्रस्वधार्थमालुक्य सकलाक्षर: ।
वीजनामानि कतिचित् वक्ष्यामि विदुषां मुदे ॥
माया लज्जा परा संवित् त्रिगुणा भुवनेश्वरी ।
हृल्लेखा शम्भुवनिता शक्तिर्देवीश्वरी शिवा ॥
महामाया पार्व्वती च संस्थानकलरूपिणी ।
परमेश्वरी च भुवना धात्री जीवनमध्यगा ॥ ह्रीं ॥
वह्निहीनेत्वथयुग्माया स्थिरमाया प्रकीर्त्तिता ॥
हीं ॥
शान्तिशक्तिविन्दुनादैर्लक्ष्मीवीजं च उच्यते ।
श्रीर्लक्ष्मीर्विष्णुवनिता रमा क्षीरसमुद्रजा ॥ श्रीं ॥
षोड़शायधनं वह्निवामाक्षिविन्दुसंयुतम् ।
चन्द्रवीजमनाकृष्टं वधूवीजमिदं स्मृतम् ।
वधूर्नितम्बिनी योनिदेकाक्षी जीवकामिनी ॥ स्त्रीं
नादविन्दुसमायुक्तो द्वादशस्वरको भगम् ।
योनि: सरस्वतीवीजमधरं वाग्भवश्च वाक् ॥ ऐं
हकारो वामकर्णाढ्यो नादविन्दुविभूषित: ।
कूर्च्चं क्रोध उपदर्पो दीर्घहुङ्कार उच्यते ।
शान्तश्च दीर्घकवचं मार । प्रमथ इत्यपि ॥ हूं ॥
कामाक्षरं वह्निसंस्थं रतिविन्दुविभूषितम् ।
कामवीजमिदं प्रोक्तं रतिवीजं तदेव हि ॥ क्लीं ॥
कामाक्षरं धरासंस्थं रतिविन्दुविभूषितम् ।
गुप्तकामीवीजमिदं गोपालवीजमित्यपि ॥
तत्कामवीजं कामेशीवीजं शक्तिकला परा ॥ क्लीं ॥
सद्यान्त्यकशीर्षमिन्दुशीर्षं प्रासादमुच्यते ॥ हौं ॥
कलाढ्यं शक्तिवीजं क्रोड़ाङ्कुशाभिध: ॥ क्रों ॥
आकारो विन्दुमान् पाश: शेषश्च ममर्द्दित: ।
सकला भुवनेशानी कामेशी वीजमुच्यते ॥
नमस्तु हृदयं स्वाहा द्विठद्वयगतं ठठ: ॥
नम: ॥ स्वाहा ॥
चन्द्रयुग्मं शिरो वेदमाता ज्वलनसुन्दरी ।
स्वाहा परा देवभोज्यं ठद्वयं चन्द्रयुग्मकम् ।
भृगीश्चविन्दुमाता देवास्यं वह्निसुन्दरी ॥ स्वाहा ॥
शिखा वषट् शिरोमध्य शक्रमाता हरप्रिया ॥
शिखा वषट् च । वषट् कवचं क्रोधो वर्म्मकूर्च्चमित्यपि ।
क्रोधास्त्रौ हुं तनुत्रञ्च शस्त्रादौ रिपुसंज्ञक: ॥ हुं ॥
अक्षिनेत्रयुगं वौषट् ॥ वौषट् ॥ फट्कारं शस्त्रमायुधम् ॥ फट् ॥
नामान्यस्य ह्सौ: प्रेतवीजम् ॥ ह्सौ: ॥ हंसोऽजपामनु: ॥ हंस: ॥
गकारो विन्दुमान् विघ्नवीजं गणेशवीजकम् ॥ गं ॥
भूमिस्थं सोमसौविन्दुयुतं भूवीजमीरितम् ॥ लं ॥
ठान्तं दहनरेन्द्रयुतन्तु विषवीजकम् ॥ ठौं ॥
अथ कामकलावामनयनं विन्दुसंयुतम् ।
अकमात्राकलावाणीनादोर्द्धेन्दु: सदाशिव: ।
अनुच्चार्यतुरीया च विश्वमातृकला परा ॥ ईं ॥
नाद: ॥

भूतडामरसङ्केतबोधार्थं भूतडामरीयबीजनामा-न्यपि लिख्यन्ते ।
प्रणवो विषबीजं स्यात् ध्रुवं हालाहलं स्मृतम् ।
कालमृत्युनिपथं ज्ञेयं महद्रूपी निरञ्जनम् ॥ प्रणवम् ॥
गगनस्थं योमवक्त्रं धर्म्मभैरवलङ्कृतम् ।
नादबिन्दुसमायुक्तं बीजं प्राणात्मकं स्मृतम् ॥ ह्रीं
क्रोधीशं गगनारूढं धर्म्मभैरवलङ्कृतम् ।
विशालिकाबिन्दुयुतं पितृभूवासिनी स्मृतम् ॥ क्रीं
क्रोधकालात्मकं कुर्य्याद्धौनिकं वाग्भवं स्मृतम् ।
नादबिन्दुसमायुक्तं समाधाय्योग्रभैरवीम् ॥
बीजमेतत्तु कथितं शुद्धबुद्धिप्रवर्द्धकम् ॥ ऐं ॥
क्रोधीशं बलभद्रस्थं भैरवीनादबिन्दुभिः ।
त्रिमूर्त्तिमन्मथं कामराजस्त्रैलोक्यमोहनम् ।
इन्द्रासनगतो ब्रह्म समूर्त्तिस्तु समन्मथः ॥ क्लीं ॥
संयुक्तं धर्म्मभैरव्यारक्ताख्यं बलिभं जनम् ।
नादबिन्दुसमायुक्तं किङ्किनी बीजमुत्तमम् ॥ ह्रौं ॥
नादबिन्दुसमायुक्तं रक्ताख्यं बलिभोजनम् ।
कालरात्र्यासनोपेतं पिशिताख्यं महामनुम् ॥ ह्रां ॥
विदार्य्यालिङ्गितोग्रात्यौत्रिमस्तकगतोपमः ।
नादबिन्दुसमायुक्तो विवृथ. पिशिताशनम् ॥ ह्रुं ॥
धर्म्मध्वजाधः कालाग्निः सोऽर्द्धेन्दुबिन्दुभिः ।
युगात्मकारकं बीजं भैरवेन प्रकाशितम् ॥ स्फें ॥
कपर्द्दिनं समादाय लतजः क्षितिविग्रहम् ।
संयुक्तं धर्म्मभैरव्या लोहयं नादबिन्दुमान् ॥ प्रीं ॥
कपालीद्वयमादाय महाकालेन मण्डितम् ।
समासनमिति प्रोक्तं चण्डिकादिप्रयोजयेत् ॥
ठं ठं ठः ठः ॥
गगनस्थं योमवक्त्रं चन्द्रलतविभूषितम् ।
खड्गीनमिति संप्रोक्तं यामिनी कालरात्रियुक् ॥
ह्रूं ह्रूँ ॥
गगनो गगनाकाशं नादबिन्दुविभूषितम् ।
विदारी भूषितश्चैव बीजं वैवस्वतोऽहकम् ॥ ह्रॅां ॥
कौमाराख्या कालचक्रा च महाकालेन साधितम् ॥
तदनादिपञ्चरश्मिः स्वष्टिस्थित्यन्ततद्विधिः ॥ ॐ ॥
योमस्थं तालजङ्घास्थं बिन्दुनादविभूषितम् ।
कूर्च्चं कालो महाकालः क्रोधबीजं निरञ्जनम् ॥ हूँ ॥
इति प्राणतोषिणी ॥ )

बीजकः, पुं, मातुलुङ्गकः इति जटाधरः ॥ वृक्ष-विशेषः । विजयासार इति हिन्दी भाषा । तत्पर्य्यायः । पीतसारः २ पीतशालकः ३ बन्धकपुष्पः ४ प्रियकः ५ सर्जकः ६ आसनः ७ । अस्य गुणाः । कुष्ठवीसर्पश्वित्रमेहगुदक्रिमि-श्लेष्मास्रपित्तनाशित्वम् । त्वच्यत्वम् । केश्यत्वम् । रसायनत्वञ्च । इति भावप्रकाशः ॥ ( यथा, हरिवंशे । १५५ । २० ।
"असनैर्व्वीजकैश्चैव मन्दारैश्चोपशोभितम् ॥")

बीजे, स्त्री ॥

बीजकृत्, क्ली, ( बीजं वीर्य्यं करोति वर्द्धयतीति । कृ + क्विप् । ) वाजीकरणम् । इति राजनिर्घण्टः ॥

बीजकोशः } पुं, ( बीजानां कोष आधार इव । )
बीजकोषः } पद्मबीजाधारचक्रिका । पोँफल इति ख्यातः । इति भरतः ॥ तत्पर्य्यायः । वराटकः २ । इत्यमरः ॥ कर्णिका ३ । इति जटाधरः ॥ वारिकुब्जः ४ शृङ्गाटकः ५ । इति शब्दरत्नावली ॥

बीजगर्भः, पुं, ( बीजानि गर्भेऽभ्यन्तरे यस्य । ) पटोलः । इति राजनिर्घण्टः ॥

बीजगुप्तिः स्त्री, ( बीजानां गुप्तिर्यत्र । ) शिम्बी । इति राजनिर्घण्टः ॥

बीजधान्यं, क्ली, ( बीजप्रधानं धान्यम् । ) धान्यकम् । इति राजनिर्घण्टः ॥

बीजनं, क्ली, (बीज्यतेऽनेनेति । वि + ईज + करणे ल्युट् ।) व्यजनम् । (यथा, आर्य्यासप्तशत्याम् । ४५० ।
"मलयजमपसार्य्य घनं बीजनविघ्नं विधाय बाहुभ्याम् ॥
स्मरसन्तापादगणितनिदाघमालिङ्गति मिथु-नम् ॥")
वस्तु । कोके जीवञ्जीवे च पुं । इति सारस्वतः ॥

बीजपादपः, पुं, ( बीजप्रधानः पादपः । ) भल्लातकः । इति राजनिर्घण्टः ॥ ( बीजोत्पन्न-वृक्षमात्रञ्च ॥ )

बीजपुष्पं, क्ली, ( बीजप्रधानं पुष्पं यस्य । ) मरुवकः । मदनवृक्षः । इति मेदिनी । पे, २६ ॥

बीजपूरः, पुं, ( बीजानां पूरः सम्पूर्णो यत्र । ) फलपूरः । इत्यमरः ॥ टावा लेबु इति वङ्गभाषा ॥ बिजौरा इति हिन्दी भाषा ॥ तत्पर्य्यायः । बीजपूर्णः २ पूर्णबीजः ३ सुकेशरः ४ बीजकः ५ केशराम्लः ६ मातुलुङ्गः ७ सुपूरकः ८ रुचकः ९ बीजफलकः १० जन्तुघ्नः ११ दन्तुरच्छदः १२ पूरकः १३ रोचनफलः १४ । अस्य फलगुणाः । अम्लत्वम् । कटुत्वम् । उष्णत्वम् । श्वासकासपवनशमनत्वम् । कण्ठशोधनकरत्वम् । लघुत्वम् । हृद्यत्वम् । दीपनत्वम् । रुचिकारित्वम् । पावनत्वम् । आध्मानगुल्महृद्रोगप्लीहोदरार्शोनाशित्वम् । विबन्धे हिक्कायां शूले छर्द्याञ्च शस्यत्वञ्च । इति राजनिर्घण्टः ॥ * ॥ अपि च ।
"बीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु ।
रक्तपित्तहरं कण्ठजिह्वाहृदयशोधकम् ।
श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् ॥"
तद्भेदमधुकर्कटी । यथा,—
"बीजपूरोऽपरः प्रोक्तो मधुरो मधुकर्कटी ।
मधुकर्कटिका स्वाद्वी रोचनी शीतला गुरुः ।
रक्तपित्तक्षयश्वासकासहिक्काभ्रमापहा ॥"
इति भावप्रकाशः ॥
( यथा, महाभारते । ३ । १५८ । ४२ ।
"लकुचानकास्तथा जीवान् दाडिमान् बीज-पूरकान् ॥")

बीजपूर्णः, पुं, ( बीजेन पूर्णः । ) छोलङ्गः । इति रत्नमाला ॥ बीजपूरः । इति राजनिर्घण्टः ॥

बीजपेशिका, स्त्री, ( बीजस्य शुक्रस्य पेशिकेव । ) अण्डकोषः । इति राजनिर्घण्टः ॥

बीजफलकः, पुं, ( बीजप्रधानं फलं यस्य । कन् । ) बीजपूरः । इति राजनिर्घण्टः ॥

बीजमातृका, स्त्री, ( बीजानां बीजमन्त्राणां मातेव जपमालात्वादस्यास्तथात्वम् । ) पद्मबीजम् । यथा,—
"पद्माक्षं पद्मबीजञ्च कर्णिका बीजमातृका ॥"
इति हारावली ॥

बीजरत्नः, पुं, ( बीजं रत्नमिव यस्य । ) माषकलायः । इति हेमचन्द्रः ॥

बीजरुह, पुं, ( बीजात् रोहतीति । रुह + इगुपधात् कः । ) शाल्यादिः । यथा,—
"कुरुण्टाद्या अग्रबीजा मूलजास्तूत्पलादयः ।
पर्व्वयोनय इक्ष्वाद्याः स्कन्दजाः शल्लकीमुखाः ॥
शाल्यादयो बीजरुहाः संमूर्च्छजास्तृणादयः ।
स्युर्व्वनस्पतिकाद्या यस्य षडेते मूलजातयः ॥"
इति हेमचन्द्रः ॥
( क्वचित् वाच्यलिङ्गोऽपि दृश्यते ॥)

बीजरेचनं, क्ली, ( बीजं रेचनं रेचकं यस्य । ) जयपालः । इति राजनिर्घण्टः ॥

बीजवपनं, क्ली, (बीजानां वपनम् ।) क्षेत्रे बीजस्य क्षेपणम् । तस्य दिनं दीपिकायाम् ।
"पूर्व्वाग्नियाम्यफणिपित्र्यविशाखभेषु
रिक्ताष्टमीविगतचन्द्रतिथिं विहाय ।
द्व्यङ्गालिगोमृगदये विकुजार्किवारे
शस्तेन्दुयोगकरणेषु हलप्रवाहः ॥
हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः ।
चित्रायाञ्च शुभे चन्द्रे स्थिरस्वमनुजोदये ॥
हेमवारिविलिप्तस्य बीजस्योत्तमयत्नः शुचिः ।
इन्द्रं चित्ते निधायाथ स्वयं मुष्टित्रयं वपेत् ॥
कृत्वा वाम्योन्यपोत्साहं तर्क्को हृष्टमानसः ।
प्राङ्मुखः कलसं गृह्य इमं मन्त्रमुदीरयेत् ॥
त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे ।
नमस्ते मे शुभं नित्यं कृषिं मेधां शुभं कुरु ॥
रोहन्तु सर्व्वशस्यानि काले देवः प्रवर्षतु ।
कर्षकास्तु भवन्त्वग्र्या धान्येन च धनेन च
स्वाहा ॥
उप्त्वा बीजन्तु तत्रैव भोक्तव्यं बान्धवैः सह ।
बीजवपनं प्राजापत्यतीर्थेन । यथा, हारीतः । कनिष्ठायाः पश्चात् प्राजापत्यमावपनम् । होमतर्पणे प्राजापत्येन कुर्य्यादिति । होमतर्पणे लाजहोमप्राशनकादितर्पणे । पराशरः ।
"वैशाखे वपनं श्रेष्ठं मध्यमं रोहिणीरवौ ।
अतः परस्मिन्नधमं न जातु श्रावणे शुभम् ॥"
ज्योतिषे ।
"पूर्व्वभाद्रपदा मूलं रोहिण्युत्तरफल्गुनी ।
विशाखा शतभिषा वाथ धान्यानां रोपणे वरा ॥
सदोषा रजनी नीली पुत्त्रवित्तैर्विमुच्यते ।
स्वयंजाते पुनस्ते हि पालयन् नैव दुष्यति ॥
आरामे गृहमध्ये वा मोहात् सर्षपमावपन् ।
पराभवं रिपोर्याति ससाधनधनक्षयम् ॥
निशा नीली पलाशश्च चिञ्चा श्वेतापराजिता ।
कोविदारश्च सर्व्वत्र सर्व्वं निघ्नन्ति मङ्गलम् ॥"
निशा हरिद्रा । कोविदारको रक्तकाञ्चनः ।

"हेमाम्भसा हृष्टवीजं स्नातो मन्त्रेण रोपयेत्।
वसुधेति सुशीतेति पुण्यदेति धरेति च।
नमस्ते सुभगे नित्यं द्रुमोऽयं वर्द्धतामिति॥"

इति ज्योतिस्तत्त्वम्॥

वीजरुहः, पुं, (वीजादेव रुहो यस्य। वीजप्रधानो रुहो वा।) व्रसनः। इति राजनिर्घण्टः॥

वीजसञ्चयः, पुं, (वीजानां सञ्चयः।) वीजसंग्रहः। तच्छुभाशुभदिनादिर्यथा,—

"हस्ताचित्रादितिस्वातीरेवत्यां श्रवणाह्वये।
स्थिरे लग्ने गुरौ शुक्रे वीजं धार्य्यं शुभवासरे॥
माघे वा फाल्गुने वापि सर्व्ववीजानि संग्रहेत्।
शोषयेत्तापयेद्दिने रात्रौ चोपनिधापयेत्॥
ततश्च पुटिकां बद्ध्वा शोषयेच्च पुनः पुनः।
स्थापयेच्च प्रयत्नेन यथा भूमिश्च न स्पृशेत्॥
दीपाग्निना च संस्पृष्टं दृष्ट्वा चोपहतञ्च यत्।
वर्जनीयं तथा वीजं यत् स्यात् कीटसमन्वितम्॥*॥

याम्याहिरुद्राग्निविशाखपूर्व्वा-
माहेन्द्रपित्र्येतरभैः शुभाहे।
धान्यादिसंस्थापनमेषु शस्तं
स्थिरास्थिरद्व्यङ्गगृहोदयेषु॥

सौम्यादितिमघाज्येष्ठोत्तरास्त्रेषु च कारयेत्।
सौरे लग्ने शुभे चन्द्रे निधनक्रूरवर्ज्जिते॥
क्षेमदं कोष्ठके धान्यं गर्गो वदति सर्व्वदा।
धनदाय सर्व्वलोकहिताय देहि मे धान्यं स्वाहा।

नम ईहायै ईहादेवी सर्व्वलोकविवर्द्धनी कामरूपिणि धान्यं देहि स्वाहा।
लेखयित्वा इमं मन्त्रं धान्यागारे विनिक्षिपेत्॥"
पुराणसर्व्वस्वे।
"मन्त्रं लिखित्वा पत्रे च मध्ये धान्यस्य धारयेत्।
पत्रञ्च धान्यराशेस्तु मूषिकादिनिवृत्तये॥
हस्तिवाजिधनगमनं स्यादभिनवासु नारीषु।
क्षयमपि शस्यफलानां न बुधो बुधवासरे कुर्य्यात्॥

त्रिषूत्तरेषु रेवत्यां धनिष्ठावारुणेषु च।
एतेषु षट्सु विज्ञेयं धान्यनिष्क्रयणं बुधैः॥
श्रवणात्रयं विशाखाध्रुवपौष्णपुनर्व्वसूनि पुष्यश्च।
अश्विन्यथ ज्येष्ठा धनधान्यविवर्द्धिनी कथिता॥"

इति ज्योतिस्तत्त्वम्॥

वीजसूः, स्त्री, (वीजानि सूते इति। सू + क्विप्।) पृथ्वी। इति हेमचन्द्रः॥

वीजाकृतं, त्रि, (वीजेन सह कृतं कृष्टमिति। "कृञो द्वितीयतृतीयशम्बवीजात् कृषौ।" ५।४।५८। इति डाच्।) उप्तकृष्टम्। इत्यमरः॥ हे वीजेन सह कृष्टे क्षेत्रे। वीजेन सह कृतं कृष्टं वीजाकृतम्। तीयशम्बवीजेति डाच्। आदावुप्तं पश्चात् कृष्टं उप्तकृष्टम्। इति भरतः॥

वीजाम्लं, क्ली, (वीजे अम्लोऽम्लरसो यस्य।) वृक्षाम्लम्। इति राजनिर्घण्टः॥

वीजी, [न्] पुं, (वीजमस्त्यस्येति। वीज + इनिः।) पिता। इति हेमचन्द्रः॥ (यथा, उद्वाहतत्त्वे।

"अतएव द्वैतनिर्णयेऽपि सापिण्ड्यगणने वीजिनमारभ्येत्युक्तम्।" यथा च गौतमसंहितायाम्। ४।१।

"असमानप्रवरैर्व्विवाह ऊर्द्धं सप्तमात् पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमात्॥")
वीजविशिष्टे, त्रि॥ (यथा, मनौ। ९।५१।
"तथैवाक्षेत्रिणो वीजं परक्षेत्रप्रवापिणः।
कुर्व्वन्ति क्षेत्रिणामर्थं न वीजी लभते फलम्॥")

वीजोदकं, क्ली, (वीजमिव कठिनमुदकम्। तस्य कठिनत्वात्तथात्वम्।) करका। इति त्रिकाण्डशेषः॥

वीजोप्तिचक्रं, क्ली, (वीजानामुप्तये शुभाशुभसूचकं चक्रम्।) वीजवपनजन्यशुभाशुभज्ञानार्थसर्पाकारचक्रम्। यथा,—

"सूर्य्यभाद्रगः स्थाप्यस्त्रिनाडी कान्तरक्रमात्।
मुखे त्रीणि गले त्रीणि भानि द्वादश तूदरे॥
पुच्छे चतुर्व्वहिः पञ्च दिनभाच्च फलं वदेत्।
वदने चोप्तकं विद्यात् गलेऽङ्गारकस्तथा॥
उदरे धान्यवृद्धिः स्यात् पुच्छे धान्यक्षयो भवेत्।

ईतिरोगभयं राज्ये चक्रे वीजोप्तिसम्भवे॥"
सूर्य्यभात् सूर्य्यभुज्यमाननक्षत्रात्। त्रिनाडीकान्तरक्रमादिति यदश्विन्यां रविस्तदा तामारभ्य गणयेत्। त्रिनाडीषु अश्विनीभरणीकृत्तिकासु दत्त्वा रोहिणी वहिः कार्य्या मृगशिरस आर्द्रापुनर्व्वसुनाडीषु दत्त्वा पुष्यो वहिः कार्य्यः। एवं क्रमेणान्या लेख्याः। चोप्तकं शस्यशून्यताम्। ईतयः।
"अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः।
प्रत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥"

इति ज्योतिस्तत्त्वम्॥

वीज्यः, त्रि, (विशेषेण इज्यः पूज्यः। अथवा वीजाय हितः इति। "उगवादिभ्यो यत्।" ५।१।२। इति यत्।) यस्य कस्यचित् कुलभवः। तत्पर्य्यायः। कुलसंभवः २। इत्यमरः॥ वंश्यः ३ कौलकेयः ४ कुलजः ५। इति शब्दरत्नावली॥ कुलीनः ६ कुल्यः ७ कुलभवः ८। इति जटाधरः॥

वीटिः, स्त्री, (विशेषेण एटति छायानिस्वानयष्ट्यादिं वेष्टयित्वा प्रवर्द्धते। वि + इट + "इगुपधात् कित्।" उणा० ४।११९। इति इन्। स च कित्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर वीड़ा इति भाषा। इति केचित्॥

वीटिका, स्त्री, (वीटिरेव। स्वार्थे कन् स्त्रियामाप्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर वीड़ि इति भाषा। इति केचित्॥ (यथा, राजतरङ्गिण्याम्। ४। ४३०।
"भूसंज्ञयामि कस्य त्वं एषाया इति सभ्रुवः।
इदन्त्या वीटिकास्तस्या वृत्तान्तमुपलब्धवान्॥")

वीटी, स्त्री, (वीटि + वा ङीष्।) ताम्बूलवल्ली। इति केचित्॥ सुसज्जीकृतताम्बूलम्। पानेर वीड़ि इति भाषा। इति केचित्॥

वीणा, स्त्री, (वेति वृद्धिमाश्चमपगच्छतीति। वी गतौ + "रास्नासास्नास्थूणावीणाः।" उणा० ३।१५। इति नः। निपातनाद्गुणाभावो णत्वञ्च।) विद्युत्। इति मेदिनी। णे, २८॥ (वेति गीतुश्चित्तं व्याप्नोतीति। वी व्याप्तौ + नः।) स्वनामख्यातवाद्यम्। तत्पर्य्यायः। वल्लकी २ विपञ्ची ३। सा तु सप्ततन्त्रीयुक्ता परिवादिनी ४। इत्यमरः॥ ध्वनिमाला ५। इति जटाधरः। घण्टमती ६ विपञ्चिका ७। इति शब्दरत्नावली॥ घोषवती ८ कण्ठकूणिका ९। (यथा, महाभारते। ६। १३४। १४।
"सप्तर्षयः सप्त चाप्यहर्व्वाणि
सप्ततन्त्री प्रथिता चैव वीणा॥")
तद्भेदा यथा। शिवस्य वीणा लम्बी १ सरस्वत्याः कच्छपी २ नारदस्य महती ३ गणानां प्रभावती ४ विश्वावसोः वृहती ५ तुम्बुरोः कलावती ६ चाण्डालानां कण्डोलवीणा चाण्डालिका च ७। तस्या अङ्गादीनां नामादि यथा। तस्याः कायः कोलम्बकः। तस्या निबन्धनं उपनाहः। तस्या दण्डः प्रवालः। तस्याः प्रान्तवक्रकाष्ठं ककुभः प्रसेवकश्च। तस्या मूले वंशशलाकाया कलिका कूणिकापि च। तस्या वादनं कोणः। इति हेमचन्द्रादयः॥ अस्या विवरणं वाद्यशब्दे द्रष्टव्यम्॥

वीणादण्डः, पुं, (वीणाया दण्डः।) वीणास्थिततावूपरिकाष्ठम्। तत्पर्य्यायः। प्रवालः २। इत्यमरः॥

वीणानुबन्धः, पुं, (वीणाया अनुबन्धः।) उपनाहः। इति हारावली॥

वीणावादः, त्रि, (वीणां वादयतीति। वद + णिच् + अण्।) वीणावादकः। तत्पर्य्यायः। वैणिकः २। इत्यमरः॥ (यथा, वाजसनेयसंहितायाम्। ३०। २९।
"शब्दायाडम्बराघातं महसे वीणावादमिति॥")

वीणावादकः, पुं, (वीणाया वादकः।) वीणावाद्यकर्त्ता। इति शब्दरत्नावली॥

वीणास्यः, पुं, (वीणा आस्यमिव यस्य। तथैव स्फुटगानकरणात्।) नारदः। इति जटाधरः॥

वीतं, क्ली, (वेति स्म। वी + क्तः। अथवा अजति स्म। अज + गत्यर्थेति क्तः।) असारहस्त्यश्वम्। युद्धाक्षममित्यर्थः। इत्यमरः॥ अङ्कुशकर्म्म। इति मेदिनी। ते, ५८॥ (यथा, माघे। ५। ४७।
"निर्धूतवीतमपि वालकमुन्नमन्तं
यन्ता क्रमेण परिसान्त्वनतर्ज्जनाभिः॥"
सांख्योक्तानुमानविशेषः। यथा, सांख्यतत्त्वकौमुद्याम्। ५।
"प्रथमं तावद्द्विविधं वीतमवीतञ्च। अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतम्॥" अस्य विशेषविवरणं तत्रैव द्रष्टव्यम्॥ त्रि। कमनीयः। यथा, ऋग्वेदे। ४। ७। ६।
"तं शश्वतीषु मातृषु वन आ वीतमश्रितम्॥"
"वीतं कान्तम्।" इति तद्भाष्ये सायणः॥)

वीतंसः, पुं, (विशेषेण वहिरेव तस्यते भूष्यते इति । वि+तनस+घञ् । "उपसर्गस्य घञ्यमनुष्ये बहुलम् ।" ६ । ३ । १२२ । इति दीर्घः ।) मृगपक्षिणां बन्धनोपकरणम् । इत्यमरः ॥ मृगपक्षिणां विश्वासहेतोः प्रावरणम् । इति मेदिनी । से, ४० ॥

वीतः, त्रि, (विशेषेण इतः स्म । वि+इण्+क्तः ।) शान्तः । इति हेमचन्द्रः ॥ गतः । विपूर्व्वेन्धातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥ (यथा, रघौ । ५ । २ ।
"स मृण्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घ्यशीलः ।" )

वीतदम्भः, त्रि, (वीतस्त्यक्तो दम्भो येन सः ।) त्यक्तदम्भः । तत्पर्य्यायः । अवल्कनः २ । इति जटाधरः ॥

वीतनः, पुं, गलकपार्श्वद्वयम् । यथा, हेमचन्द्रे ।
"गलकस्तु कन्धरामध्यं गलकपार्श्वौ तु वीतनौ ॥"

वीतभयः, पुं, (वीतं भयं यस्य यस्माद्वा ।) विष्णुः । यथा,—
"अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्त्तनः ॥"
इति तस्य सहस्रनामस्तोत्रम् ॥

वीतरागः, पुं, (वीतो रागो विषयवासना यस्य ।) बुद्धः । इति त्रिकाण्डशेषः ॥ विगतरागे, त्रि । यथा,—
"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्म्मुनिरुच्यते ॥"
इति भगवद्गीता ॥
(यथा च महाभारते । १२ । ३४६ । ४७ ।
"वीतरागश्च पुत्त्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥")

वीतशोकः पुं, अशोकवृक्षः । इति शब्दमाला ॥ (वीतः शोको यस्मात् । अशोकाख्यस्य तत्पानेन शोकनाशकत्वादस्य तथात्वम् । तथा च तिथितत्त्वे ।
"त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥"
विगतः शोको यस्य ।) विगतशोके, त्रि । (यथा, महाभारते । ३ । १७३ । १० ।
"सर्व्वकामगुणोपेतं वीतशोकमनामयम् ॥")

वीतिः, स्त्री (वयनमिति । वी+क्तिन् ।) गतिः । दीप्तिः । (यथा, गौ० रामायणे । २ । १०० । ४७ ।
"सुवर्णवीतिप्रतिमाः पद्मकिञ्जल्कसप्रभाः ।
दिवा विभान्ति साक्षात्ताः कुबेरप्रहिताः स्त्रियः ॥")
प्रजननम् । असनम् । धावनम् । इति मेदिनी । ते, ५६ ॥ (पानम् । यथा, ऋग्वेदे । ७।६२।२ ।
"प्रवामन्यासि महाम्यसुररं गर्म्मं हविषो
वीतये मे ॥"
"हविषो वीतये पानाय ।" इति तद्भाष्ये सायणः ॥ प्राप्तिः । यथा, ऋग्वेदे । ३ । १३ । ४ ।
"स नः शर्म्माणि वीतयेऽग्निर्यच्छतु शन्तमा ।"
"वीतये सम्भजनाय अग्निहोत्रादिकर्म्मप्राप्त्यर्थम् ।" इति तद्भाष्ये सायणः ॥ यज्ञः । यथा, ऋग्वेदे । ६ । १ । ४ ।
"अध्वर्य्यमस्त्वा देवानां वीतिमश्यमा ॥"
"वीतिं यज्ञं अश्यमा प्राप्नवाम सह अश्यन्ति अभिगच्छ ।" इति तद्भाष्ये सायणः ।)

वीतिः, पुं, घोटकः । इति हेमचन्द्रः ॥ (यथा, राजतरङ्गिण्याम् । ७ । ३७७ ।
"अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे ।
कस्यास्य च त्वदीयानां ह्यानामिव प्रस्खि-
गाम् ।" )

वीतिहोत्रः, पुं, (वी गतिकान्त्यसनखादनेषु + कर्म्मणि क्तिन् । वीतिः पुरोडाशादिः हूयते अस्मिन्निति । "हुयामाश्रुभसिभ्यस्त्रन् ।" उणा० ४ । १६७ । इति त्रन् । अथवा वीतये पानाय होत्रं हव्यं यस्य ।) अग्निः । इत्यमरः ॥ सूर्य्यः । इति मेदिनी । ते, २९७ ॥ (यथा, राजतरङ्गिण्याम् । ७ । ३७७ ।
"अस्मिंस्तु वीतिमारूढे वीतिहोत्रसमे नृपे ।"
प्रियव्रतपुत्त्रान्यतमः । यथा, भागवते ।५।१।२५।
"अग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व्व एवाग्निनामानः ॥" राजविशेषः । यथा, महाभारते । ७ । ६८ । १० ।
"रणोवाहान् वीतिहोत्रान् विगर्त्तान् मार्त्तिकावतान् ॥"
हैहयवंशीयराजविशेषः । यथा, हरिवंशे । ३३ । ५० ।
"तेषां कुले महाराज हैहयानां महात्मनाम् ।
वीतिहोत्रः सुजातश्च भोजाश्चावन्तयः स्मृताः ॥"
त्रि, प्राप्तयज्ञः । यथा, ऋग्वेदे । १।८४।१८ ।
"कस्मै देवा आवहानाशु होम
को मंसते वीतिहोत्रः सुदेवः ॥"
"वीतिहोत्रः प्राप्तयज्ञः । * * * । वीतिहोत्रः वीयत्यादिषु अस्मात् कर्म्मणि मन्त्र इत्येतादिना क्तिन् स चोदात्तः । होत्रं होमः हुयामाश्रुभसिभ्यस्त्रन् इति त्रन्प्रत्ययः । वीतिः प्राप्तो होमो येन बहुव्रीहौ पूर्व्वपदप्रकृतिस्वरत्वम् ॥" इति तद्भाष्ये सायणः ॥ कान्तयज्ञः । यथा, ऋग्वेदे । २ । ३८ । १ ।
"नूनं देवेभ्यो विहिधाति रत्न-
मथाभजद्वीतिहोत्रं स्वस्तौ ॥"
"वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तौ अविनाशे नेमे आ अभजद्भागिनं करोतु ।" इति तद्भाष्ये सायणः ॥)

वीथिः, स्त्री, (विध्यतेऽनया । विध+इगुपधात् किदितीन् । बाहुलकाद्दीर्घः ।) वीथी । यथा,—
"पङ्क्तिवर्त्मगृहाङ्गेषु वीथिर्वीथी च वीथिका ।"
इति रत्नकोषः ॥
(यथा, राजतरङ्गिण्याम् । ३ । ३६२ ।
"तदिदं नगरं कुत्र पवित्राः सुलभाः सुवि ।
सुभगाः सिन्धुसम्भेदाः क्रीडावसथवीथिषु ॥"
वर्त्मार्थे यथा, राजतरङ्गिण्याम् । ३ । ३०७ ।
"चिरं खलु खिलीभूताः स्तनसत्त्वस्य वीथयः ।
धीर त्वयेव न तासु सञ्चारो यदि दृश्यते ॥")

वीथिका, स्त्री, (वीथिरेव । स्वार्थे कन् ततष्टाप् ।) वीथिः । इति शब्दरत्नावली ॥ (यथा, कथासरित्सागरे । ७३ । ७० ।
"अस्ति दक्षिणदिक्प्रान्ते प्राग्यो जम्बूरिव ।
पिच्छिलाक्ष्यां घनश्यामा तमालवनवीथिका ॥")

वीथी, स्त्री, (वीथि+वा ङीष् ।) पङ्क्तिः । गृहाङ्गम् । (यथा, हरिवंशे । ८३ । १८ ।
"तावुभौ सुवचनौ जग्मतुर्मोक्षकारणात् ।
वीथ्यां माल्यापणानां वै गन्धाक्षानां दिपाविव ॥")
नाट्यरूपकः । वर्त्म । इति मेदिनी । थे, ११ ॥ (यथा, महाभारते । ५ । ५१ । ३२ ।
"वीथीं कुर्व्वन् महाबाहुर्द्रावयन् मम वाहिनीम् ।
वृत्तमिव गदापाणिर्यूगाक्षं दर्शयिष्यति ॥" *॥)
अथ वीथी ।
"वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥
सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्व्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥
कश्चिदिदुत्तमो मध्यमोऽधमो वा शृङ्गारबहुलत्वाचास्याः कैशिकीवृत्तिबहुलत्वम् ॥ * ॥
अस्याख्रयोदशाङ्गानि निर्द्दिशन्ति मनीषिणः ।
उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥
वाक्केल्यधिवले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहारमृदवानि च तानि तु ॥*॥
तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते ॥ * ॥
मिथोवाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ॥
यथा, विक्रमोर्व्वश्याम् । वद्भीस्थविदूषकचेट्योरन्योन्यवचनम् । * ।
त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥
यथा । तत्रैव राजा ।
सर्व्वक्षितिभृतां नाथ दृष्टा सर्व्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥
नेपथ्ये तत्रैव प्रतिशब्दः राजा कथं दृष्टेत्याह । अत्र प्रश्नवाक्यमेवोत्तरवाक्यत्वेन योजितम् । नटादित्रितयविषयमेवेदमिति कश्चित् ॥ * ॥
प्रियाभैरप्रियैर्व्वाक्यैर्विलोभ्य छलनात् छलम् ।
यथा, वेण्यां भीमार्ज्जुनौ ।
कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः
सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य
मित्त्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य
दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुम-
भ्यागतौ स्वः ॥
अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्य-
चित् ।

उद्दीप्यते यद्वचनं वचनाद्धास्यरोषकृत् ॥ * ॥
वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ॥
द्वित्र्युपलक्षणं यथा,—
भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
तासामर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः ॥

केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्ति- वाक्केलिरित्याहुः । अन्ये चानेकस्य प्रश्नस्यैकमुत्तरम् ॥ * ॥

अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम् ॥
यथा, मम प्रभावत्यां वज्रनाभः ।
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥
प्रद्युम्नः । अरे रे असुरापसद अलममुना बहुप्रलापेन मम खलु ।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षततोक्षितेयं
क्षौणी क्षणेन पिशिताशनलोभनीया ॥ * ॥

गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥
यथा वेण्यां राजा ।
अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ममोरुयुग्मम् ।
अनन्तरं प्रविश्य कञ्चुकी देव भग्नं भग्नमित्यादि । अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् ॥ * ॥

व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ॥
यथा छलितरामे सीता । जाद कालं कखु उअज्झा एण गन्तव्वं तहिं सो राआ विणएण पणमिदव्वो । लवः । अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् । सीता । जादमो तुह्माणं पिदा । लवः । किमावयो रघुपतिः पिता । सीता । साशङ्कं मा अण्णधा सङ्कधणं क्खु तुह्माणं स आलां ज्जेव पुहवीएत्ति ॥*॥

प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥
संवरणकार्युत्तरं प्रहेलिका । यथा रत्नावल्याम् सुसङ्गता । सहि जस्स कदे तुमं आअदा सो इध ज्जेव चिट्ठदि सागरिआ । कस्स कदे अहं आअदा सुसंगदे चित्तफलअस्स । अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृतः ॥ * ॥

असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् ।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः ॥
तत्राद्यं यथा मम प्रभावत्याम् । प्रद्युम्नः सहकारवल्लीमवलोक्य सानन्दं अहो कथमिहैव ।

अलिकुलमञ्जुलकेशी
परिमलबहुला रसावहा तन्वी ।
किशलयपेशलपाणिः
कोकिलकलभाषिणी प्रियतमा मे ॥

एवमसम्बद्धोत्तरेऽपि । तृतीयं यथा । वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम् ।

व्याहारो यत् परस्यार्थे हास्यलोभकरं वचः ।
यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति विदूषकः मा दाव उवदेससुद्धा गमिस्ससि । इत्युपक्रमेण दासः । विदूषकं प्रति आर्य्य उच्यतां यस्त्वया क्रमभेदो लक्षितः । विदूषकः पढमं बम्हणपूआ भोदि सा इमाए लङ्घिदा मालवी मायन इत्यादिना । नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास्यलोभकारिणा वचसा व्याहारः ॥ * ॥

दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ॥
क्रमेण यथा,—
प्रियजीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ॥
तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया ।
सुखैकायतनं जातं दुःखायैव ममाधुना ॥

एतानि चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि निष्पष्टतया नाटकादिषु विनिविष्टान्यपि इहोदाहृतानि । वीथी च नानारसानाञ्चात्र मालारूपतया स्थितत्वाद्वीथीयम् । यथा मालविका ।” इति साहित्यदर्पणम् ॥ * ॥ * ॥ सूर्य्यगमनपथः । यथा,—

“नागवीथ्युत्तरा वीथी अजवीथ्यास्तु दक्षिणा ।
उभे आषाढमूलन्तु अजवीथ्युदयास्त्रयः ॥
अभिजित् पूर्व्वतः स्वाती नागवीथ्युत्तरास्त्रयः ।
अश्विनी कृत्तिका याम्या नागवीथ्युत्तराः स्मृताः ।
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता ॥
पुष्याश्लेषापुनर्व्वसौ वीथिरैरावती स्मृता ।
तिस्रस्तु वीथयो ह्येता उत्तरो मार्ग उच्यते ॥
पूर्व्वा उत्तरफल्गुन्यौ मघाश्चैरावती भवेत् ।
पूर्व्वोत्तरे प्रोष्ठपदे गोवीथी रेवती स्मृता ॥
श्रवणा च धनिष्ठा च वारुणञ्च जरद्गवम् ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
हस्ता चित्रा तथा स्वाती नागवीथिरिति स्मृता ।
विशाखमित्रपैत्र्यञ्च नागवीथिरिहोच्यते ॥
मूलपूर्व्वोत्तराषाढा वीथिर्वैश्वानरी तथा ।
स्मृतास्तिस्रस्तु वीथ्यस्ता मार्गे वै दक्षिणे बुधैः ॥”
इति मात्स्ये १०१ अध्यायः ॥ * ॥

अपि च ।
“उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् ।
पितृयानः स वै पन्था वैश्वानरपथाद्बहिः ।
तत्रासते महात्मान ऋषयो येऽग्निहोत्रिणः ॥”
इति विष्णुपुराणे २ अंशे ८ अध्यायः ॥ * ॥

तत्र ज्योतिश्चक्रे वीथीक्रमो वायुनोक्तः ।
“सर्व्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥”

तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथित्रयेण त्रिधा भिद्यते । तथा हि त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथित्रयम् । आर्षभी गोवीथी जारद्गवी चेति वैषुवते मध्यमार्गे वीथित्रयम् । अजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयम् । तदुक्तं तत्रैव ।

“अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ।
रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥
पुष्याश्लेषे तथादित्या वीथी चैरावती स्मृता ।
एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥
तथा द्वे चापि फल्गुन्यौ मघा चैवार्षभी मता ।
हस्ता चित्रा तथा स्वाती गोवीथीति तु शब्दिता ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता ।
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥
मूलाषाढोत्तराषाढा अजवीथीति शब्दिता ।
श्रवणञ्च धनिष्ठा च मार्गी शतभिषक् तथा ॥
वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता ।
एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते ॥”

याम्या भरणी । आदित्या अदितिर्देवताका पुनर्व्वसुः । मार्गी मृगवीथी । एवं स्थिते अगस्त्यादुत्तरमजवीथ्याश्च दक्षिणम् । किन्त्वगस्त्यनिकटवर्त्तिनो वैश्वानरपथाद्बहिर्वैश्वानरवीथीं विहाय मृगवीथीमात्रं पितृयानमित्यर्थः । इति तट्टीकायां श्रीधरस्वामी ॥

वीथ्यङ्गः, त्रि, ( वीथ्या अङ्गमिवाङ्गं यस्य । ) नाटकभेदः । इति हेमचन्द्रः ॥ अस्य विवरणं वीथीशब्दे द्रष्टव्यम् ॥

वीध्रं, क्ली, ( विशेषेण इन्धे दीप्यते इति । वि + इन्ध + “वाविन्धेः ।” उणा० २ । २६ । इति रक् । ) नभः । ( यथा, अथर्व्ववेदे । ४ । २० । ७ ।
“वीध्रे सूर्य्यमिव सर्पन्तं मा पिशाचं तिरस्करः ॥”)
वायुः । अग्निः । इति संक्षिप्तसारोणादिवृत्तिः ॥

वीध्रः, त्रि (वि + इन्ध + रक् ।) विमलः । इत्यमरः ॥

वीनाहः, पुं, (विशेषेण नह्यते इति । वि + नह + घञ् । उपसर्गस्य दीर्घः । ) कूपस्य मुखबन्धनम् । इत्यमरः ॥ अस्य कूपस्य यन्मुखबन्धनं येन मुखं बध्यते तत्र वीनाहः नाम्नोपकृ इति ख्यातः । विशेषेण नह्यते कूपमुखमनेन । वीनाहः । नह्य ञौ बन्धे घञ् नहेर्नाहादित्वात् वेर्व्वा दीर्घः विनाहः वीनाहः कूपमुखबन्धः इति माध्व. । इति भरतः ॥

वीपा, स्त्री, विद्युत् । इति शब्दरत्नावली ॥

वीप्सा, स्त्री, क्रियागुणद्रव्यैर्व्याप्तुमिच्छा । यथा,—
“सुक्तिर्नेऽच्युतोपास्तिं भूतं भूतमभि प्रभुः ।
भक्तो विभुमभि प्राज्ञो गोविन्दमभितिष्ठति ॥”
अच्युतोपास्तिं अनु मुक्तिं स्यादित्यर्थः । प्रभुरीश्वरः भूतं भूतं अभि सर्व्वप्राणिषु अस्ति इत्यर्थः । वीप्सायां प्रयुक्तस्य पदस्य द्विर्भावः । इति मुग्धबोधटीकायां दुर्गादासः ॥

वीर, द त् क प्रार्थ्ये। इति कविकल्पद्रुमः। (चुरा०-आत्म०-अक०-सेट्।) द, अविवीरत। शौर्य्यमुद्यमः। इति दुर्गादासः।

वीरं, क्ली, (अज्+"स्फायितञ्चिवञ्चीति।" उणा० २। १३। इत्यादिना रक्। अजेर्वीभावः। वीर+अच् वा।) शृङ्गी। नडः। इति मेदिनी। रे, ६०॥ मरिचम्। पुष्करमूलम्। काञ्जिकम्। उशीरम्। आरुकम्। इति राजनिर्घण्टः॥ वीरशब्दो मेदिन्यां पवर्गीयवकारादौ दृष्टोऽपि वीरधातोरन्तःस्थवकारादौ दर्शनादत्र लिखितः॥

वीरः, पुं, (वीरयतीति। वीर विक्रान्तौ+पचाद्यच्। यद्वा, विशेषेण ईरयति दूरीकरोति शत्रून्। वि+ईर+इगुपधात् कः। यद्वा, अजति क्षिपति शत्रून्। अज+स्फायितञ्चीत्यादिना रक्। अजेर्व्वीः।) शौर्य्यविशिष्टः। तत्पर्य्यायः। शूरः २ विक्रान्तः ३। इत्यमरः।३।८।७७॥ गभीरः ४ तरस्वी ५। इति जटाधरः॥ (यथा, महाभारते। १। १४१। ४५।
"अगाराभ्यो वृकस्येव बुद्धिमानपि स्त्रियकः।
निर्ज्जिता यत्त्वया वीरास्तस्मादीरतरो भवान्॥"
यथा च ऋग्वेदे। १। ११४। ८।
"वीरान्मानो रुद्रभामितो वधी-
र्हविष्मन्तः सदमित्त्वा हवामहे॥"
"वीरान् वीक्रान्तान्।" इति सायणः॥ पुत्त्रः। यथा, ऋग्वेदे। ५। २०। ४।
"वीरैः स्याम सधमादः॥"
"वीरैः पुत्त्रैश्च सधमादः सहमादन्तः स्याम तथा कुरु।" इति तद्भाष्ये सायणः॥ * ॥ पतिः। पुत्त्रश्च। यथा, मार्कण्डेये। ६५। ३१।
"न चाल्पपुण्यनहितो वीरहीनां तथा स्त्रियम्।
महादुःखितविप्रस्य पादाम्भोसि क्षिपेद्धितः॥"
यथा च अवीरा निष्पतिसुता। इत्यमरदर्शनाच॥*॥ दनायुदेत्यपुत्त्रः। यथा, महाभारते। १। ६५। ३३।
"दनायुषः पुनः पुत्त्राश्चत्वारोऽसुरपुङ्गवाः।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः॥")
जिनः। नटः। इति हेमचन्द्रः॥ विष्णुः। यथा, वीरोऽनन्तो धनञ्जयः। इति विष्णुसहस्रनाम॥ शृङ्गारादष्टरसान्तर्गतरसविशेषः। तत्पर्य्यायः। उत्साहवर्द्धनः २। इत्यमरः॥
"उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः॥"
उत्साहं वर्द्धयति इति उत्साहवर्द्धनः नन्द्यादित्वात्॥ दानधर्म्मयुद्धेषु औचानपेक्षोत्साहकारी रसो वीरः। वीरयन्ते अत्र वीरः। वीर सद्भूत शौर्य्ये घञ् स्फीतस्येव स्वादते इति सर्व्वरसमलन्नयां कटाक्षितम्। इति भरतः॥ * ॥ तान्त्रिकभावविशेषः। यथा,—
"तत्रैव त्रिविधो भावो दिव्यवीरपशुक्रमः।
दिव्यवीरैकजः प्रोक्तः सर्व्वसिद्धिप्रदायकः॥"
इति रुद्रयामले ११ पटलः॥

अपि च।
"भावस्तु त्रिविधः प्रोक्तो दिव्यवीरपशुक्रमात्।
गुरवश्च त्रिधा चात्र तथैव मन्त्रदेवता॥"
इति तत्रैव ६ पटलः॥
अन्यच्च।
"पशुभावं हि प्रथमे द्वितीये वीरभावकम्।
तृतीये दिव्यभावश्च इति भावत्रयं क्रमात्॥
आदौ दशमदण्डेन पशुभावमथापि वा।
मध्याह्ने दशदण्डेन वीरभावमुदाहृतम्।
सायाह्ने दशदण्डे तु दिव्यभावं शुभप्रदम्॥"
इति च तत्रैव १९ पटलः॥
अन्यच्च।
"जन्ममात्रं पशुभावं वर्षषोडशकावधि।
ततश्च वीरभावस्तु यावत् पञ्चाशतो भवेत्॥
द्वितीयेऽपि वीरभावस्तृतीये दिव्यभावकः।
एवं भावत्रयेणैव भावमैक्यं भवेत् प्रिये॥"
इति वामकेश्वरतन्त्रे ५१ पटलः॥
वीराचारविशिष्टः। यथा,—
"कुलाचाररतो धीरः कुलसङ्गी सदा भवेत्।
संविदासेवनं कुर्य्यात् सोमपानं महेश्वरि॥
सर्व्वथा कुरुते देवि वीरश्चोद्धतमानसः।
दिव्यस्तु देवता प्रायश्चन्दनागुरुलेपनैः।
रक्तचन्दनगन्धैश्च सुदिव्यो नात्र संशयः॥
भस्माङ्गधूसरो वीर उन्मत्तवद्विचेष्टितः।
सुरापानरतो नित्यं बलिपूजापरायणः॥
नरश्छागश्च महिषो मेषः शूकर एव च।
शशकः शल्लकी गोधा खड्गी कूर्म्मो दश स्मृताः॥
वानरश्च खरश्चैव गजाश्वादिविहङ्गमाः।
इत्यादिभिर्बलिदानैः पूजयेत् स्वेष्टदेवताम्॥
सिद्धमन्त्रो भवेत् वीरो न वीरो मद्यपानतः।
कलौ तु भारते वर्षे लोका भारतवासिनः।
गृहे गृहे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि॥"
इत्युत्पत्तितन्त्रम्॥ * ॥
कलौ तदाचारनिषेधो यथा,—
"दिव्यवीरमयो भावः कलौ नास्ति कदाचन।
केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्॥"
इति महानिर्व्वाणतन्त्रम्॥ * ॥
सल्लकीयः। वराहकन्दः। लताकरञ्जः। करवीरः। अर्ज्जुनः। इति राजनिर्घण्टः॥ यज्ञाग्निः। इति वीरहाशब्दटीकायां भरतः॥ उत्तरः। सुभटः। इति मेदिनी॥

वीरः, त्रि, श्रेष्ठः। इति हेमचन्द्रः॥ (कर्म्मठः। यथा, ऋग्वेदे। ८। ७३। १६।
"इमं धा वीरो अमृतं वीरं कृणवीत मर्त्त्यः॥"
"धीरः कर्म्मणि समर्थः।" इति तद्भाष्ये सायणः॥ यथा च। तत्रैव। ६। २३। ३।
"कर्त्ता वीराय सुष्वय उलोकं
दाता वसु स्तुवते कीरये चित्॥"
"वीराय यज्ञादि कर्म्मसु दक्षाय।" इति तद्भाष्ये सायणः॥ प्रेरयिता। यथा, तत्रैव। ६। ६५। ४।

"इदा हि वो विधते रत्नमस्तीदा
वीराय दाशुष उषासः॥"
"वीराय प्रेरयित्रे।" इति तद्भाष्ये सायणः।)

वीरकः, पुं, (वीर एव। स्वार्थे कन्।) करवीरः। इति राजनिर्घण्टः॥ (विक्रान्तः। समर्थः। यथा, ऋग्वेदे। ८। ८०। २।
"असौ य एषि वीरको गृहं गृहं विचाकशत्॥"
"वीरको वीरः समर्थस्त्वम्।" इति तद्भाष्ये सायणः॥ अपकृष्टदेशविशेषवासी। यथा, महाभारते। ८। ४४। ४२।
"कारस्करान् माहिषकान् कालिङ्गान् केरलांस्तथा।
कर्कोटकान् वीरकांश्च दुर्द्धर्म्मांश्च विवर्ज्जयेत्॥"
चाक्षुषमन्वन्तरीयसुरान्यतमः। यथा, भागवते। ८। ५। ८।
"मुनयस्तत्र वै राजन् हविष्मद्वीरकादयः॥")

वीरजयन्तिका, स्त्री, (वीराणां जयन्तिकेव।) रणे वीराणां नृत्यम्। इति हेमचन्द्रः॥

वीरणं, क्ली, उशीरतृणम्। तत्पर्य्यायः। वीरणम् २ कटायनम् ३। इति शब्दरत्नावली॥ वीरतरम् ४। इत्यमरः॥ वीरभद्रम् ५। इति रुद्रः॥ (यथा, भागवते। १०। ११। ५१।
"तमापतन्तं स निगृह्य तुण्डयो-
र्दोर्भ्यां वकं कंससखं सतां पतिः।
पश्यत्सु बालेषु ददार लीलया
मुदावहो वीरणवद्दिवौकसाम्॥")
अपि च।
"स्याद्वीरणं वीरतरं वीरञ्च बहुमूलकम्।
वीरणं पाचनं शीतं स्तम्भनं लघु तिक्तकम्॥
मधुरं ज्वरनुद्वान्तिमेदजित् कफपित्तहृत्।
तृष्णास्रविषवीसर्पकृच्छ्रदाहव्रणापहम्॥
वीरणस्य तु मूलं स्यादुशीरमभयं तथा।
अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि॥
उशीरं पाचनं शीतं स्तम्भनं लघु तिक्तकम्।
मधुरं ज्वरहृद्वान्तिमदघ्नुत् कफपित्तनुत्।
तृषास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्॥"
इति भावप्रकाशः॥
(पुं, प्रजापतिविशेषः। यथा, महाभारते। १२। ३४८। ४१।
"सनत्कुमारादपि च वीरणो वै प्रजापतिः।
कृतादौ कुरुशार्द्दूल धर्म्ममेतदधीतवान्॥"
यथा च मात्स्ये। ४। ४०।
"वीरणस्यात्मजायान्तु चक्षुर्म्मनुमजीजनत्॥")

वीरतरं, क्ली, वीरणम्। इत्यमरः॥

वीरतरः, पुं, शरः। इति भूरिप्रयोगः॥ (त्रि, सामर्थ्यवान्। यथा, ऋग्वेदे। ८। २४। १५।
"नह्यङ्ग पुरा च न जज्ञे वीरतरस्त्वत्॥"
"वीरतरः सामर्थ्यवान्।" इति तद्भाष्ये सायणः॥ अयमनयोरतिशयेन वीरः। वीरश्रेष्ठः। यथा, महाभारते। ४। ५२। १४।
"नरर्षभास्ते तु नरर्षभेण
वीरा रणे वीरतरेण भग्नाः॥")

**वीरतरासनं**, क्ली, ( वीरतराणां साधकश्रेष्ठानां आसनम् । ) आसनविशेषः । यथा,—
"मृदु कोमलमास्तीर्णं संग्रामपतितं हि यत् ।
अनुयापादितं वापि मृतं वा नरमासनम् ।
गर्भच्युतं त्वचं वापि नारीणां योनिजां त्वचम् ।
सर्व्वसिद्धिप्रदं देवि सर्व्वतोऽतिमनस्त्विदम् ।
त्वचं वा यौवनस्थानां कुर्य्याद्वीरतरासनम् ॥"
इति मुण्डमालातन्त्रे ३ पटलः ॥

**वीरतरुः**, पुं, (वीरस्तन्नाम्ना ख्यातस्तरुः ।) अर्ज्जुनवृक्षः । इत्यमरः ॥ कोकिलाक्षवृक्षः । इति रत्नमाला । बिल्वान्तरवृक्षः । भल्लातकः । इति राजनिर्घण्टः ॥

**वीरपर्णं**, क्ली, सुरपर्णम् । इति राजनिर्घण्टः ॥

**वीरपत्नी**, स्त्री, ( वीराणां पत्नी । यद्वा, वीरः पतिर्यस्याः । "नित्यं सपत्न्यादिषु ।" ४।१।३५। इति पत्युर्नकारादेशः । "ऋन्नेभ्यो ङीप् ।" ४।१।५। इति ङीप् । ) वीरभार्य्या । इत्यमरः ॥ (यथा, मार्कण्डेये । १२५ । ७ ।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥"
नदीविशेषः । यथा, ऋग्वेदे ।१।१०४।४।
"ऋञ्जसी कुलिशी वीरपत्नी
पयो हिन्वाना उदभिर्भरन्ते ॥"
"वीरपत्नी वीरस्य पालयितुः शतनसंज्ञितास्तिस्रो नद्यः ।" इति तद्भाष्ये सायणः ॥)

**वीरपत्रा**, स्त्री, ( वीरप्रियाणि पत्राणि यस्याः । ) विजया । इति राजनिर्घण्टः ॥

**वीरपानं**, क्ली, वीराणां श्रमनाशाय पानम् । यथा,—
"वीरपानन्तु यत् पानं वृत्ते भाविनि वा रणे ।"
इत्यमरः ॥
("वा भावकरणयोः ।" ८ । ४ । १० । इति विकल्पेन णत्वमपि । यथा, गौ० रामायणे । ४ । ६ । ७२ ।
"मत्तोऽयमिति दुर्ब्बुद्धे मोहात्त्वामवमन्यसे ।
मदीये संप्रहारेऽस्मिन् वीरपाणं समर्थ्यताम् ॥")

**वीरपुष्पी**, स्त्री, सिन्दूरपुष्पी । इति राजनिर्घण्टः ॥

**वीरबाहुः**, पुं, ( वीराः समर्था बाहवो यस्य । ) विष्णुः । यथा, "वीरबाहुर्विदारणः ।" इति तस्य सहस्रनामस्तोत्रम् ॥ ( धृतराष्ट्रपुत्रान्यतमः । यथा, महाभारते । १ । ६७ । १०२ ।
"उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ॥"
रावणपुत्रः । इति रामायणम् ॥ वानरविशेषः । यथा, गौ० रामायणे । ६ । १७ । १५ ।
"वीरबाहुः सुबाहुश्च नलश्च वनगोचरः ।")

**वीरभद्रः**, पुं, (वीराणां भद्रं येन ।) अश्वमेधाश्वः । वीरश्रेष्ठः । वीरणम् । इति मेदिनी ॥ शिवगणविशेषः । तस्योत्पत्तिर्यथा,—
"इत्याकर्ण्य महाकालः सम्यक् ज्ञात्वा सतीव्ययम् ।
यत्तं सुते सती देवी त्यक्तवत्यात्मजीवितम् ॥
जीवं स्थिते सती तत्र तन्महाकालसान्निधात् ।
तदध्वानीवरौद्रोऽभूत् बहुकोपाग्निदीपितः ॥
ततस्तत्क्रोधजाहङ्काराविरासीन्महाद्युतिः ।
प्रत्यक्षः प्रतिमाकारः कालस्तत्तु प्रकम्पनः ॥
उवाच च प्रणम्येशं भूमुण्डौ मस्तकौ दधत् ।
आज्ञां देहि पितः किन्ते करवै दास्यमुत्तमम् ।
ब्रह्माण्डमेककवलं करवाणि त्वदाज्ञया ॥
इति प्रतिज्ञां तस्येशः श्रुत्वा जनममन्यत ।
कृतकृत्यमिवात्मानं तं मुदा प्रत्युवाच ह ॥
महावीरोऽसि रे भद्र मम सर्व्वगणेष्विह ।
वीरभद्राख्यया हि त्वं प्रथितिं परमां व्रज ।
कुरु मे सत्वरं कार्य्यं दक्षयज्ञं क्षयं नय ॥"
इति काशीखण्डे ८८ अध्यायः ॥
( यथा च महाभारते । १२ । २८४ । ५१ ।
"वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ।
भद्रकालीति विख्याता देव्याः कोपाद्विनिःसृता ॥")

**वीरभद्रकं**, क्ली, ( वीरभद्रमेव । स्वार्थे कन् । ) वीरणम् । इति जटाधरः ॥

**वीरभार्य्या**, स्त्री, ( वीराणां भार्य्या । ) वीरपत्नी । इत्यमरः ॥

**वीरमाता**, [ ऋ ] स्त्री, ( वीराणां माता । ) वीरजननी । तत्पर्य्यायः । वीरसूः २ । इत्यमरः ॥ ( यथा, भागवते । ६ । १४ । ४० ।
"अस्त्वेवमित्युपामन्त्र्य देवी स प्रययौ पुरीम् ।
पुनस्तत्र गतोऽब्दान्ते उर्व्वशीं वीरमातरम् ॥")

**वीररजः**, [स्] क्ली, ( वीराणां वीरभाविनां धारणार्थं रजः । ) सिन्दूरम् । इति राजनिर्घण्टः ॥ वीरस्य धूलिश्च ॥

**वीररेणुः**, पुं, (वीरा रेणव इव यस्य ।) भीमसेनः । इति त्रिकाण्डशेषः ॥

**वीरवती**, स्त्री, मांसरोहिणी । इति भावप्रकाशः ॥ ( विक्रमपुराधीश्वरविक्रमतुङ्गनृपकर्म्मचारिवीरवरस्य कन्या । यथा, कथासरित्सागरे । ५३ । ६० ।
"यस्य धर्म्मवती नाम भार्य्या वीरवती सुता ।
पुत्त्रः सत्यवरश्चेति त्रयं परिकरो गृहे ॥")

**वीरवत्सा**, स्त्री, ( वीरो वत्सः पुत्त्रो यस्याः । ) वीरजननी । इति जटाधरः ॥

**वीरविप्रावकः**, पुं, शूद्रधनेन होमकर्त्ता । यथा,—
"वीरविप्रावको जुह्वन् धनैः शूद्रसमाहितैः ।"
इति हेमचन्द्रः ॥

**वीरवृक्षः**, पुं, ( वीरनामको वृक्षः । ) भल्लातकः । इत्यमरः ॥ अर्ज्जुनवृक्षः ॥ इति हेमचन्द्रः ॥ बिल्वान्तरः । इति राजनिर्घण्टः ॥ वृक्षविशेषः । देधान इति भाषा । तत्पर्य्यायः । वीरतरः २ इन्द्रद्रुमः ३ अम्लरोहरः ४ । इति रत्नमाला ॥

**वीरसूः**, स्त्री, (वीरान् पुत्त्रानेव सूते इति । वीर + सू + क्विप् । ) वीरमाता । इत्यमरः ॥ (यथा, महाभारते । १ । २०० । ७ ।
"जीवसूर्व्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसम्पन्ना यज्ञपत्नी पतिव्रता ॥"
पुत्त्रप्रसविनी । यथा, ऋग्वेदे ।१०।८५।४४।
"वीरसूर्द्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ॥"
"वीरसूः पुत्त्राणामेव सवित्री ।" इति तद्भाष्ये सायणः ॥)

**वीरसेनं**, क्ली, आरूकवृक्षः । इति राजनिर्घण्टः ॥

**वीरसेनः**, पुं, नलराजपिता । इति नैषधम् ॥ (यथा, महाभारते । ७ । ५२ । ५४ ।
"निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्त्रोऽभवन्नाम्ना नलो धर्म्मार्थकोविदः ॥")

**वीरसेनजः**, पुं, ( वीरसेनात् जायते इति । जन + डः । ) नलराजः । इति नलोदयः ॥

**वीरहा**, [ न् ] पुं, ( वीरान् हन्तीति । हन + क्विप् । ) नष्टाग्निब्राह्मणः । इत्यमरः ॥ यस्याग्निहोत्रिणः प्रमादादिना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाणः स्यात् स वीरहोच्यते । वीरयति शौर्य्यं कारयति इति वीर इन्द्रः तत्र शौर्य्यं इत्यस्मात् चुरादि णिः प्रेरणे ण्यन्तात् पचाद्यचि वीरो यज्ञाग्निः तं हतवान् इति क्विपि वीरहा । इति भरतः ॥ ( यथा, वाजसनेयसंहितायाम् । ३० । ५ । "नरकाय वीरहणम् ।" "वीरहणं नष्टाग्निं शूद्रं वा ।" इति तद्भाष्यम् ॥ ) विष्णुः । यथा । वीरहा माधवो मधुः । इति विष्णुसहस्रनाम । वीरहन्तरि, त्रि ॥

**वीरा**, स्त्री, मुरा । क्षीरकाकोली । तामलकी । एलवालुका । पतिपुत्त्रवती । रम्भा । विदारी । दुग्धिका । मलयूः । क्षीरविदारी । इति मेदिनी । रे, ६८ ॥ पुस्तकान्तरे मुरास्थाने सुरा विदारीस्थाने गम्भारी इति पाठः । काकोली महाशतावरी । ग्रहकन्या । ब्राह्मी । अतिविषा । मदिरा । इति राजनिर्घण्टः ॥ शिंशपावृक्षः । इति रत्नमाला ॥ (करन्धमराजपत्नी । यथा, मार्कण्डेये । १२३ । १ ।
"वीर्य्यचन्द्रसुता सुभ्रूर्वीरा नाम सुभव्रता ।
स्वयंवरे सा जगृहे महाराजं करन्धमम् ॥"
नदीविशेषः । यथा, महाभारते ।६।९।२०।
"पूर्व्वाभिरामां वीराञ्च भीमां मोघवतीं तथा ॥"
विक्रमशालिनी । यथा, मार्कण्डेये ।१२५।७।
"तेषामेतद्वचः श्रुत्वा वीरा वीरप्रजावती ।
वीरगोत्रसमुद्भूता वीरपत्नी प्रहर्षिता ॥")

**वीराम्लः**, पुं, अम्लवेतसः । इति राजनिर्घण्टः ॥

**वीरार्कं**, क्ली, आरूकम् । इति राजनिर्घण्टः ॥

**वीराशंसनं**, क्ली, ( वीरान् आशंसयति अत्र स्वास्यामि वा नवेति चिन्तां जनयतीति । आ + शंस + णिच् + ल्युट् ।) अतिभयप्रदा युद्धभूमिः । इत्यमरः ॥

**वीरासनं**, क्ली, ( वीराणां साधकानामासनम् । ) भित्त्याद्यनाश्रित्योपवेशनम् । यथा,—
"दिवानुगच्छेत्ता गास्तु तिष्ठन्नूर्द्ध्वं रजः पिबेत् ।

शुश्रूषित्वा नमस्कृत्वा रात्रौ वीरासनं वसेत् ॥"
इति प्रायश्चित्ततत्त्वे मनुः ॥
अन्यच्च।
"एकपादमथैकस्मिन् विन्यसेदूरु संस्थितम्।
इतरस्मिन् तथा पश्चाद्वीरासनमिदं विदुः ॥"
इति घेरण्डसंहिता ॥
( यथा, रघुवंशे । १३ । ५२ ।
"वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति
योगाधिरूढ़ा इव शाखिनोऽपि ॥") •

वीरिणी, स्त्री, असिक्नी । यथा,—
"उपयेमे वीरणस्य तनयां दक्ष ईप्सिताम् ।
वीरिणीं नाम तस्यास्तु असिक्नीत्यपि सत्तमाः ॥"
इति कालिकापुराणे ८ अध्यायः ॥
( यथा च महाभारते । १ । ७५ । ५ ।
"वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत् सहस्रं संशितव्रतान् ॥"
वीरः पुत्रोऽस्या अस्तीति । वीर + इनि । ङीप् ।
पुत्रवती । यथा, ऋग्वेदे । १० । ८६ । ६ ।
"उताहमस्मि वीरिणीन्द्रपत्नी ॥"
"वीरिणी पुत्रवती ।" इति तद्भाष्ये सायणः ॥)

वीरुत्, [ध्] स्त्री, (विशेषेण रुणद्धि वृक्षानन्यान् ।
वि + रुध + क्विप् । "अन्येषामपीति ।" दीर्घः ।
अथवा विरोहतीति वीरुत् । विपूर्व्वस्य रुहेः
क्विपि धकारो विधीयते इति काशिका ।७।३।
५३ ।) विस्तृता लता । तत्पर्य्यायः । गुल्मिनी २
उलपः ३ । इत्यमरः ॥ वीरुधा ४ । इति शब्द-
रत्नावली ॥ प्रताना ५ कक्षः ६ । इति जटा-
धरः ॥ ( यथा, रघुवंशे । ८ । ३६ ।
"अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ॥"
ओषधिः । यथा, ऋग्वेदे । २ । ६७ । ५ ।
"विश्वो वीरुत् सुरोधन्नहिलोत प्रजा उतप्रस-
ूवत्नः ॥"
"वीरुत्सु ओषधीषु ।" इति तद्भाष्ये सायणः ॥
वृक्षमात्रे, पुं । यथा, महाभारते ।२।४५।२४।
"यानि पश्यसि वै ब्रह्मन् स्थलानीहास्य वीरुधः ।
एते नक्तन्तरस्तात कालेन परिभक्षिताः ॥"
यथा च ऋग्वेदे । ६ । ११३ । २ ।
"सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिः ॥"
"वीरुधां वनस्पतीनामिति ।" इति तद्भाष्ये
सायणः ॥ लतानां वीरुधाश्च कथञ्चिद्भेदमाह ।
यथा, भागवते । ३ । १० १९ ।
"वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः ।"
"ये पुष्पं विना फलन्ति ते वनस्पतयः । ओषधयः
फलपाकान्ताः । लता आरोहणापेक्षाः । त्वक्-
सारा वेणवादयः । लता एव काठिन्येनारोहणा-
नपेक्षा वीरुधः । ये पुष्पैः फलन्ति ते द्रुमाः ।"
इति तट्टीकायां श्रीधरस्वामी ॥ )

वीरुधा, स्त्री, ( विशेषेण रुणद्धीति । वि + रुध +
इगुपधादिति कः । ततः स्त्रियां टाप् । अथवा
वीरुध् शब्दात् भागुरिमते टाप् । यथा,—
"वष्टि भागुरिरल्लोपः अवाप्योरुपसर्गयोः ।
टापञ्चापि हलन्तानां क्षुधा वाचा निशा
गिरा ॥")
वीरुत् । इति शब्दरत्नावली ॥

वीरेशः, पुं, ( वीराणामीशः । ) शिवः । यथा,—
"अथ त्रयोदशे मासि स्नात्वा त्रिपथगाम्भसि ।
प्रत्यूष एव वीरेशं यावद्यायाति स द्विजः ॥"
इति वीरेश्वरस्तोत्रम् ॥

वीरेश्वरः, पुं, ( वीराणामीश्वरः । ) महादेवः ।
यथा,—
"तिलान्तरेऽपि नो काश्यां भूमिर्लिङ्गं विना
क्वचित् ।
परं वीरेशसदृशं न लिङ्गङ्क्वापि सिद्धिदम् ॥
धर्म्मदञ्चार्थदं सम्यक् कामदं मोक्षदं तथा ।
यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा ध्रुवम् ॥"
इति काशीखण्डे १० अध्यायः ॥
(मैथिलानां दशकर्म्मपद्धतिकर्त्ता । तत्पद्धतिश्च ॥)

वीरोज्झः, पुं, होमाकर्त्ता । यथा,—
"अभ्युदिताभिनिर्म्मुक्तौ वीरोज्झो न जुहोति
यः ॥"
इति हेमचन्द्रः ॥

वीरोपजीविकः, पुं, अग्निहोत्रमुपजीविका यस्य ।
यथा,—
"अग्निहोत्रच्छलाद्याचापरो वीरोपजीविकः ॥"
इति हेमचन्द्रः ॥

वीर्य्यं, क्ली, (वीरे साधु । तत्र साधुः इति यत् । यद्वा,
वीर्य्यतेऽनेनेति वीर विक्रान्तौ + "अचो यत् ।"
३।१।९७। इति यत् । यद्वा वीरस्य भावः । यत् ।)
चरमधातुः । तत्पर्य्यायः । शुक्रम् २ तेजः ३
रेतः ४ बीजम् ५ इन्द्रियम् ६ । इति मनुष्य-
वर्गे अमरः ॥ वीर्य्यं शक्तिः सा च पृथिव्यादीनां
यः सारभागः तदतिशयरूपा । सा द्विविधा
चिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्र चिन्त्यक्रिया-
हेतुर्या दशरसादीनां स्वस्वकर्म्मणि स्वभाव-
सिद्धा शक्तिः । अचिन्त्यक्रियाहेतुश्च प्रभावपर-
पर्य्यायः । दयाणां रसाद्यननुरूपकार्य्यकरण-
शक्तिः । उक्तञ्च ।
"भूतप्रभावातिशयो द्रव्ये पाके रसे स्थितः ।
चिन्त्याचिन्त्यक्रियाहेतुर्वीर्य्यं धन्वन्तरेर्म्मतम् ॥"
इति चक्रदत्तोपरि शिवदासीयटीका ॥ * ॥
परवीर्य्योदरपातदोषो यथा,—
"परवीर्य्यं यदुदरं कामतोऽकामतोऽपि वा ।
आहत्य याति दैवेन तदुपायं निशामय ॥
अकामतो न दुष्टा सा प्रायश्चित्तेन शुद्ध्यति ।
कामभोगेन त्याज्या सा कर्म्मभोगेन शुद्ध्यति ॥
पितृपाके दैवपाके पूजायां नाधिकारिणी ।
षष्टिं वर्षसहस्राणि क्षयं कृत्वा स्वकर्म्मणः ।
प्रयाति भोगदेहं सा तस्मात् पापकर्म्मणः ॥"
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे ४७ अध्यायः ॥
अतिशयशक्तिभागुत्साहः । इति स्वर्गवर्गे
अमरः ॥ कर्म्मसु सुकरः प्रत्ययः उत्साहः ।
इति मधुः । कर्म्मसु दृढ़यत्नकारको भाव
उत्साहः । इति रमानाथः । कर्म्मसु प्रत्यय
उत्साह इति नयनानन्दः । अशक्ये बलोद्यम
उत्साह इति केचित् । स उत्साहः अतिशय-
शक्तिभाक् वीर्य्यम् । अतिशयितोऽध्यवसायो
वीर्य्यं साधु वीर्य्यमित्यर्थः । वीर्य्या स्त्री च वीर्य्यं
वीर्य्य इति कोषान्तरम् । इति भरतः ॥ * ॥
बलम् । प्रभावः । इति नानार्थे अमरः ॥
( यथा, ऋग्वेदे । ३ । २५ । २ ।
"अग्निः सनोति वीर्य्याणि विद्वान्
सनोति वाजममृताय भूषन् ॥"
"वीर्य्याणि पशुपुत्रादिसम्पद्रूपाणि सामर्थ्यानि ।"
इति तद्भाष्ये सायणः ॥ यथा च भागवते । ६ ।
१७ । ३१ ।
"ज्ञानवैराग्यवीर्य्याणां नहि कश्चिद्व्यपाश्रयः ॥"
शरीरसामर्थ्यम् । यथा, ऋग्वेदे । ४ । ५० । ७ ।
"स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्था-
वभि वीर्य्येण ॥"
"वीर्य्येण शरीरसामर्थ्येन ।" इति तद्भाष्ये
सायणः ॥ शक्तिः । यथा, मनौ । ११ । ३१ ।
"न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्म्मवित् ।
स्ववीर्य्येणैव तान् शिष्यान्मानवानपकारिणः ॥
स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यं बलवत्तरम् ।
तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः ॥"
मनःशक्तिः । यथा, भागवते । ४ । १८ । १५ ।
"कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् ।
हिरण्मयेन पात्रेण वीर्य्यमोजो बलं पयः ॥")
औषधानां वीर्य्यस्य स्थितिकालो यथा,—
"यामं कल्ककषायवीर्य्यमखिलं चूर्णस्य पक्षत्रयं
षण्मासान् घृतमोदकौ सहगुड़ौ मासत्रयं
गुग्गुलोः ।
सिद्धानां रसभस्मनां सुविपुलं वीर्य्यञ्च वर्षत्रयं
किञ्चिद्गन्धविवर्ज्जितं गुणपरं तैलं पुराणं महत् ॥"
इति नारायणदासकृतपरिभाषा ॥
तेजः । इति मेदिनी ॥ चेतः । दीप्तिः । इति
शब्दरत्नावली ॥

वीर्य्यजः, पुं, ( वीर्य्याज्जायते इति । जन + डः । )
पुत्रः । इति केचित् ॥ ( यथा, भागवते । ३ ।
५ । १९ ।
"नैतच्चित्रं त्वयि कत्वाद्दरायणवीर्य्यज ॥")

वीर्य्यवान्, [त्] त्रि, (वीर्य्यमस्यास्तीति । मतुप् ।)
मांसलः । इति शब्दरत्नावली ॥ वीर्य्ययुक्तश्च ॥
( यथा, किराते । २ । ४ । '
"अतिवीर्य्यवतीव भेषजे
बहुरल्पीयसि दृश्यते गुणः ॥")

वीर्य्यवृद्धिकरं, क्ली, (वीर्य्याणां वृद्धिकरम् ।) शुक्र-
वृद्धिकारकौषधादि । तत्पर्य्यायः । वृष्यम् २
वाजीकरणम् ३ बीजकृत् ४ । इति राज-
निर्घण्टः ॥

वीर्य्या, स्त्री, ( वीर्य्यतेऽनयेति । वृ + "अचो यत् ।"
इति यत् । टाप् । ) वीर्य्यम् । इत्यमरटीकायां
भरतः ॥

कात्यायनः ।
"अवीचिनरके वर्षं वसेयुः कूटसाक्षिणः ।"॥ * ॥
याज्ञवल्क्यः ।
"उक्ते प्रतिज्ञां यस्योचुः साक्षिणः स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
वर्णानां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥"
गौतमः । नानृतवचने दोषो जीवनञ्चेत्तदधीनं न तु पापीयसो जीवनमिति ।
"द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥"
तेषामिति शेषः । यत्तु ।
"साक्षिणां लिखितानाञ्च निर्द्दिष्टानाञ्च वादिनाम् ।
तेषामेकोऽन्यथावादी भेदात् सर्व्वेऽप्यसाक्षिणः ॥"
इति कात्यायनवचनम् ॥
तत्त्रयाणां तुल्यरूपाणां मध्ये एकस्याप्यन्यथावादे अपरस्य तत्तुल्यस्य तत्प्रतिपन्नतया तृतीयस्य किञ्चिद्वादित्वे तत्र भेदात् परस्परविरुद्धार्थाभिधाने भेदात् साक्षिभ्यो न निर्णय इति परम् । बृहस्पतिस्तु साक्षिद्वैधे कर्म्मनिष्ठानां ग्रहणमाह गुणिद्वैधे क्रियावतामित्यनेन । तथा ।
"साक्षिणोऽर्थिसमुद्दिष्टान् सतम् दोषेषु दोषयेत् ।
अदुष्टं दूषयन् वादी तत्समं दण्डमर्हति ॥"
इति ॥
तत्समं विवादसमम् । सभासदादिविदितसाक्षिदूषणमेव ग्राह्यं न तु अपरादिसाक्षिभिः प्रतिपाद्यम् ॥ * ॥ अनवस्थापातादित्याह नारदः ।
"सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥
अन्यैश्च साक्षिभिः साध्यं दूषणं पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषस्तेषामप्यन्यसम्भवात् ॥"
असाध्यं साधनानर्हं सिद्धत्वाद्दोषवर्जनात् । अनवस्थाविरहात्तस्मात् प्रसिद्धदूषणमेव ग्राह्यम् ॥ *
दूषणमाह कात्यायनः ।
"बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयात् बान्धवः स्नेहात् वैरनिर्यातनादरिः ॥
यः साक्षी नैव निर्द्दिष्टो नाहूतो नैव दर्शितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः ॥"
यदुत्तरे येन क्रिया प्रदश्यते तमाह ।
"मिथ्याक्रिया पूर्व्ववादे कारणे प्रतिवादिनः ।
प्राङ्न्याये विधिसिद्धौ तु जयपत्रं विनिर्द्दिशेत् ॥"
मिथ्योत्तरे सति पूर्व्ववादे पूर्व्ववादिनि क्रिया प्रदेया इति शेषः ॥ * ॥ तदानीं सन्धिमाह बृहस्पतिः ।
"पूर्व्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्य्यनिर्णये ।
द्वयोरुक्तवयोः सन्धिः स्यादयःपिण्डयोरिव ॥"
उक्तप्रकारमाह स एव ।
"साक्षिसभ्यविकल्पस्तु भवेदुभयोरपि ।
दोलायमानौ यौ सन्धिं कुर्य्यातां तौ विचक्षणौ ॥"
कात्यायनः ।
"क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न दिव्यं न च साक्षिणः ।
समस्तं साक्षिणां यत्र दिव्येस्तत्र विशोधयेत् ॥"
एतत् संशयानुच्छेदे बोध्यम् । याज्ञवल्क्यः ।
"निह्नुते लिखितानेकमेकदेशे विभावितः ।
दाप्यः सर्व्वान् नृपेणार्थान् ग्राह्यस्त्वनिवेदितः ॥"
यो लिखितानेकं सुवर्णादिकं अपलपति स एकदेशे साक्ष्यादिभिर्व्विभावितः सन् सर्व्वान् दद्यात् । यद्येकदेशविभावनेन वादिनोऽवसादमवगम्य इदमपरं मया लेखयितुं विस्मृतमिति ब्रूते न तस्मै भाषाकाले अनुपन्यस्तं न दद्यादेतच्च न केवलं वाचनिकं किन्त्वेकदेशविभावनादिज्ञानेन एतास्य तदपलापि दुःशीलत्वावधारणादपरांशेऽपि तथात्वमेव सम्भाव्यते सत्यविभावकस्यापि प्रक्रान्तविषये यथा वस्तुवादावधारणादविभावितांशेऽपि सत्यवादित्वसम्भावनमित्थं रूपतर्कपरम्परा सम्भावना प्रत्ययानुगृहीतास्मादेव योगीश्वरवचनात सर्व्वं दापनीयमिति निर्णयः । एवञ्च तर्कवाक्यानुसारेण निर्णये क्रियमाणे वस्तुनोऽन्यथात्वेऽपि व्यवहारदर्शिनां न दोषः । तथा च गौतमेनापि न्यायाधिगमे तर्कोऽभ्युपायः तेनापि संगृह्य यथास्थानं गमयेदित्युक्ता तस्मादाचार्य्यादिनिन्द्याविलुपसंहृतम् । एवञ्चास्य न्यायस्य वादिद्वयसाधारणत्वादुभयविषयत्वं वचनानाम् । अतएव कात्यायनः ।
"यद्येकदेशप्राप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥"
वदतां विवदतामित्यविशेषेण दर्शयति । पूर्णापि दैविकी समग्रविषयिकापि न ग्राह्या तदेकदेशप्रतिपादिकया मानुष्या क्रियया समस्तसाध्यसिद्धिरिति । न च यद्येषां मध्ये एकमपि मया गृहीतं विभावयसि तदा सर्व्वमेव दातव्यमिति । प्रतिज्ञाविषयकत्वमेकदेशविभावितस्य वचनस्येति जीमूतवाहनमतानुसारिमैथिलमतं युक्तमिति वाच्यं प्रतिज्ञाविषयत्वे ।
"अनेकार्थाभियुक्तेन सर्व्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥"
इत्यनर्थकं प्रौढ़िवादेनाभियुज्य मानादधिकस्यापि प्रतिज्ञातस्य दानावश्यकत्वात् न ग्राह्यस्त्वनिवेदित इत्यपि व्यर्थं अनिवेदितस्यापि प्रागज्ञातत्वेनाप्रतिज्ञातस्य सर्व्वथैव देयत्वात् । न च विभावितैकदेशत्ववचनं व्याप्यभूतैकदेशविषयं तस्मिंस्तु प्रतिपादिते व्यापकैकदेशप्रतीतिरनुमानात् सम्भवतीति वाच्यं विभावितैकदेशानुमितव्यापकस्यापि न्यायतोऽग्राह्यत्वे सिद्धे न ग्राह्यस्त्वनिवेदित इत्यभिधानानुपपत्तेः । एवञ्च ।
"साध्यार्थांशे निगदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्य्ये यत्साध्यं परिकल्पितम् ॥"
इति कात्यायनवचनम् ।
तद्विषयप्रदर्शकं न्यायनिरपेक्षत्वपक्षेऽपि बोध्यमिति । यत्तु ।
"अनेकार्थाभियोगे तु यावत् संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥"
तदज्ञातनभिज्ञपुत्रादिविषयकम् । तथा हि नानाविधपित्र्यान्यभियुक्तेनाजानता नाहं जानामीति उत्तरवादिना साक्ष्यादिभिर्यावद्धनं प्रतिपादयति तावदेव पुत्त्रेण दातव्यम् एवमेव विश्वरूपजीमूतवाहनप्रभृतयः ॥ कात्यायनः ।
"अनुमानाद्गुरुः साक्षी साक्षिभ्यो लिखितं गुरु ।
अविरुद्धा त्रिपुरुषी भुक्तिस्तेभ्यो गरीयसी ॥"
अनुमानं प्रत्यासह्लितं तदाह मनुः ।
"बाह्यैर्व्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् ।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥"
स्वरो गद्गदादिः वर्णोऽस्वाभाविकः । इङ्गितं स्वेदवेपथुरोमाञ्चादि । आकारो विकृतः । चक्षुषा कातरेण । चेष्टितेन स्थानत्यागादिना । एषाञ्चान्यथासिद्धदुर्निरूप्यत्वादेभ्यः साक्षी बलवान् इत्यर्थः ॥ * ॥ मुखनिरूपणे तु याज्ञवल्क्यः ।
"देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक् चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावात् विकृतिं गच्छेन्मनोवाक्कायकर्म्मभिः ।
अभियोगे च साक्ष्ये च स दुष्टः परिकीर्त्तितः ॥"
न परोक्ता वाचं प्रतिवचनेन पूजयति तथोक्तचक्षुश्च परकीयवीक्षणेन निर्भजति कुटिलीकरोति यदा मनोवाक्कायकर्म्मभिः स्वभावात् पूर्व्वोक्तां यथायोग्यां विकृतिं गच्छेत्तदा स दुष्ट इत्यर्थः । अतएव श्रीरामायणे ।
"आकारश्छाद्यमानोऽपि न शक्योऽसौ निगूहितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥"
आकारो देहधर्म्मः मुखाप्रसादवैवर्ण्यरूपः ।
नारदः ।
"सुदीर्घेणापि कालेन लिखितं सिद्धिमाप्नुयात् ।
जानन्नात्मना लेख्यमजानंस्तु लेखयेत् ॥"
सुदीर्घेणेति संस्कारादीधकालिकत्वमस्यादयं चिरेणापि साक्ष्यं दातुं शक्नोतीत्यर्थः ॥ * ॥ लिपिज्ञः स्वहस्तेन लेखयेत् तदज्ञः परहस्तेनेत्याह व्यासः ।
"अलिपिज्ञो ऋणी यः स्यात् लेखयेत् स्वमतन्तु सः ।
साक्षी वा साक्षिणान्येन सर्व्वसाक्षिसमीपगः ॥"
बृहस्पतिः ।
"सुचिरं धारितं यच्च सीमायाश्च समन्ततः ।
अज्ञातोऽपि भवेत् साक्षी ग्रामस्तत्र न संशयः ॥"

अज्ञाता अपि साक्षिणो भवन्तीत्याहतुर्मनुकात्यायनौ ।

"अन्ये पुनरनिर्द्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्य्येष्वभ्यन्तरो यः स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥"

स्मृतिः

"दत्तादत्तेऽथ भृत्यानां स्वामिनां निर्गमे सति ।
विक्रयादानसम्बन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥
प्रकाशे साहसे वापि पारुष्ये दण्डवाचिके ।
बलोद्भवेषु कार्य्येषु साक्षिणो दिव्यमेव च ॥"

बृहस्पतिः ।

"लेख्यं वा साक्षिणो वापि विवादे यस्य दूषिताः ।
तस्य कार्य्यं न सिध्येत यावत्तन्न विशोधयेत् ॥"

लेख्यसाक्षिरूपप्रमाणम् ॥ * ॥ लेख्यशोधनमाह कात्यायनः ।

"स्वहस्तलेख्यसन्देहे जीवतो वा मृतस्य च ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥"

तथा ।

"समवेतैश्च यद्दृष्टं वक्तव्यं तत्तथैव च ।
विभिन्नेनैव कार्य्ये तु वक्तव्यं पृथक् पृथक् ॥
नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्यानमागतैः ॥
अनुद्दिष्टेन चित्तेन दृष्टं सम्यग्विदा तु यत् ।
प्रत्यक्षं तत् स्मृतं कार्य्यं साक्ष्ये साक्षी तु तद्वदेत् ॥"

नारदः ।

"यः परार्थेऽपहरति स्वां वाचं पुरुषाधमः ।
आत्मार्थे किं न कुर्य्यात् स पापो नरकनिर्भयः ॥
अर्था वै वाचि नियता वाङ्मूला वाग्विनिःसृताः ।
यस्तु तां स्तेनयेद्वाचं स सर्व्वस्तेयकृन्नरः ॥"

बौधायनः ।

"पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्व्वं भूम्यनृते हन्ति मास्म साक्षी मृषा वदन् ॥"

बृहस्पतिः ।

"यस्य दोषं प्रतिज्ञातं साक्षिभिः प्रतिपादितम् ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥"

याज्ञवल्क्यः ।

"उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्व्वसाक्षिणः ॥"

अन्यथा पूर्व्वविपरीतार्थप्रकारेण । कूटा अनादेयवचनाः । तथा ।

"यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमसावृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणञ्च विवासयेत् ॥"

तमन्येभ्यः साक्ष्यं श्रावयेत्यादिना प्रयुक्तो यः श्रावितः स्वारितद्वयात् पर्षत्सिद्धिः एवम्भूतोऽपि सभायां निगदकाले साक्ष्यं निह्नुते यस्तस्याष्टगुणो दण्डः ॥ * ॥

अथ लिखितम् ।

तत्र बृहस्पतिः ।

"षाण्मासिकेऽपि समये भ्रान्तिः संजायते यतः ।
धात्राक्षराणि सृष्टानि पत्रारूढ़ान्यतः पुरा ॥"

नारदः ।

"लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिकं साक्षिकञ्च सिद्धिर्द्देशस्थितेस्तयोः ॥
मृतास्तु साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तदप्यपार्थकं लेख्यमृते त्वाधेः स्थिराश्रयात् ॥
दर्शितं प्रतिकालञ्च पाठितं श्रावितञ्च यत् ।
लेख्यं सिध्यति सर्व्वत्र मृतेष्वपि च साक्षिषु ॥
लेख्ये देशान्तरस्थे च दग्धे दुर्लिखिते हृते ।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम् ॥
छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च ।
कर्त्तव्यमन्यलिखितं ह्येष लेख्यविधिः स्मृतः ॥
लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतम्भवेत् ।
विप्रतिपत्तौ परीक्ष्यं तत् सम्बन्धागमहेतुभिः ॥"

स्वलेख्यमसाक्षिकमपि प्रमाणं अन्यद्वारा लेख्यं साक्षिमदिति यथासंख्येनान्वयः । देशस्थितेर्यस्मिन् देशे यादृशलेख्यस्थितिः प्रवर्त्तते तत्र तादृश्याः । तयोः स्वहस्तान्यहस्तकृतलेख्ययोः । मृता इति साक्ष्यादौ मृते पुत्रादिसंस्थं लेख्यपत्रं न सिध्यति । यद्याधिभोगोऽस्ति तदा तदपि प्रमाणमित्यर्थः ॥ * ॥ यत्तमाह कात्यायनः ।

"यत्र पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
ऋणिको धनिकश्चैव नैनं पत्रं प्रमापयेत् ॥"

दर्शितमिति तथाविधमपि पूर्व्वमृणिकादिसन्निधौ स्वयमर्पणेन वा दर्शितं श्रावितं वा तदपि सिध्यतीत्यर्थः । सतो देशान्तरस्थपत्रस्य तत्कालहरणं पत्रानयनकालप्रतीक्षणम् । असतो दग्धादेः तदवलोककोपन्यासः । लेख्यमिति यत् पत्रं केनापि हेतुना अन्यनामचिह्नितं तत्र विप्रतिपत्तौ यन्नाम्ना पत्रं तेन सहास्य विश्वासहेतुभूतसम्बन्धावगमरूपकारणैर्निर्णेतव्यमिति ।

बृहस्पतिः ।

"मुमूर्षुशिशुभीतार्त्तैः स्त्रीमत्तव्यसनातुरैः ।
निग्रापतस्तु बलात्कारैः कृतं लेख्यं न सिध्यति ॥"

व्यासः ।

"दासास्वतन्त्रबालैश्च स्त्रीलतश्चैव यद्भवेत् ।
प्रमाणं नैव तल्लेख्यमिति प्राज्ञविदो विदुः ॥"

मिताक्षरायां स्मृतिः ।

"पूगश्रेणीगणादीनां या स्थितिः परकीर्त्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥"

पूगस्तु ।

"समूहो वणिगादीनां पूगः स परिकीर्त्तितः ।"
इति कात्यायनवचनोक्तः ।

आदिशब्दात् विजातीयलाभः । तेन ग्रामनगरादिः । श्रेणी तु सजातीयसमूहः ताम्बूलिककुविन्दचर्म्मकारकादिः । गणः एकक्रियार्थोद्यतः । लेख्यस्य चाप्रामाण्यशङ्कायां लेख्ययाचिका प्रागुक्तशोधनप्रकारेण तन्निरसनीयं तत्पुत्रेण तु लेख्याधीनो भोग एव उपन्यास्यो न तु लेख्यसंहरणीयम् । तदाह कात्यायनः ।

"आहर्त्ता भुक्तियुक्तोऽपि लेख्यदोषान् विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥"

बृहस्पतिः ।

उद्धरेल्लेख्यमाहर्त्ता तत्सुतो भुक्तिमेव हि ।
अभियुक्तः प्रमीतश्चेत् तत्सुतोऽपि तदुद्धरेत् ॥"

अभियुक्त इति लेख्यस्य साधुत्वज्ञापनार्थं अभियुक्ते लेख्यग्रहीतरि तदविज्ञाप्यैव मृते तत्पुत्रेण साधुत्वं साध्यमित्यर्थः तत्साधनञ्च स्वहस्तलिखनादिनेति प्रागुक्तम् ॥ * ॥

अथ भुक्तिः ।

तत्र याज्ञवल्क्यः ।

"पश्यतोऽब्रुवतो हानिर्भूमेर्व्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥"

विवादमकुर्व्वतः समक्षं भूस्वामिनः परेणासपिण्डादिना भुज्यमानाया भूमेर्व्विंशतिवर्षनिष्टत्ता स्वत्वहानिः । अत्र लोकव्यवहारकर्मत्वाद्वर्षगणना सावनेन । तथा च विष्णुधर्म्मोत्तरम् ।

"सत्राण्युपास्यान्यथ सावनेन
लौकञ्च यत् स्यात् व्यवहारकर्म्म ॥"

तत्रैव ।

"सावने च तथा मासि त्रिंशत् सूर्य्योदयाः स्मृताः ॥"

विशेषयति व्यासः ।

"वर्षाणि विंशतिर्यस्य भूर्भुक्ता तु परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥"

समर्थस्य बालत्वादिदोषरहितस्य । धनस्य दशवर्षानिष्टत्ता स्वत्वहानिः । तथा च मनुनारदौ ।

"यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥"

यत्किञ्चित् धनजातं समक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दश वर्षाणि भुज्यमानं स्वामी तूष्णीं प्रेक्षते मा भुज्यतामिति न प्रतिषिध्यति नासौ तल्लब्धुं योग्यो भवति तत्र तस्य स्वाम्यं नश्यतीत्यर्थः । गोतमः । अजड़ापौगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः इति । जड़ो विकलेन्द्रियः पौगण्डः पूतोऽनुत्पन्नश्मश्रुगण्डः कपोलो यस्य सः । तदाह नारदः ।

"बाल आषोड़शाद्वर्षात् पौगण्डश्चापि
शब्द्यते ॥"

अत्रापौगण्डः प्रकीर्त्तित इति कुल्लूकभट्टेन लिखितम् । तत्पाठेऽपि अपौगण्डस्तु पौगण्डः इति द्विरूपकोषादविरुद्धः । तस्माद्याज्ञवल्क्यादिवचनाद्विंशतिवर्षदशवर्षादिकालभोग एव स्वत्वं जनयति । यथा । कालप्राप्तिवशेन बीजमङ्कुरं जनयति तरवश्च कुसुममिति स्वामिना चापरित्यक्तेऽपि प्राचीनकालीनभोगात् स्वाम्यमन्यस्य भवति । यथा जयेन राज्ञः परराष्ट्रधनं इति । एवमेव श्रीकरवाचकणोन्नोकभवदेवभट्टभूपालिकुल्लूकभट्टपक्षधरमिश्रवर्द्धमानोपाध्यायप्रभृतयः व्यव-

हारोऽपि तादृगेव। एतद्विरुद्धवचनान्यथा व्याख्येयानि ॥*॥ तत्रोपेक्षया स्वत्वहानिं भुक्त्या च स्वत्वमाह नारदः।

"भुज्यमानान् परैरर्थान् यस्तान्मोहादुपेक्षते।
समक्षं तिष्ठतोऽप्यस्य तान् भुक्तिः कुरुते वशे ॥"

यत्तमाह बृहस्पतिः।

"स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया।"

उपेक्षया क्षमया तत्कारणञ्च स्वामिनः सुप्रीतत्वमहैतुकदयालुत्वादि। एवञ्च विंशतिवर्षान् पूर्व्वं स्वक्षतिसाध्यकर्षणपालनादेरुत्पन्नस्य एव स्वत्वम्। एवं दशवर्षात् पूर्व्वं स्वक्षतिसाध्यदोहनपालनादेरुत्पन्नदुग्धादावेव स्वत्वं तत्तत्कालपरन्तु भूमौ गवादिधनेऽपि स्वत्वमिति। पूर्व्वं तत्तन्नाशकभोगे तु चौर्य्यदोषो भवत्येव। भोगे तु स्वत्वहानिमाध्यादीनां व्यावर्त्तयति ॥*॥ पश्यतोऽब्रुवत इत्यभिधाय याज्ञवल्क्यः।

"आधिसीमोपनिक्षेपजडबालधनैर्विना।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरिह ॥"

आधिर्बन्धकद्रव्यम्। उपनिक्षेपस्तु "वासनस्थमनाख्याय समुद्रं यन्निधीयते" इति नारदोक्तः। वासनं निक्षेपाधारभूतं सम्पुटादिकम्। समुद्रं ग्रन्थ्यादियुतम्। जडो बुद्धिविकलः। बालः अप्राप्तषोडशवर्षः। उपनिधिः प्रीत्या भोगार्थमर्पितः। ततश्च आध्यादिभिर्जडादिधनैश्च विनान्यानि धनानि उक्तभोगकाले स्वामिनो नश्यन्ति एतानि तु स्वामिनो न नश्यन्ति न वा भोक्तुर्भवन्ति। मिताक्षरायां स्मृतिः।

"द्वारमार्गक्रियाभोगजलवाहादिषु क्रिया।
भुक्तिरेव तु गुर्व्वी स्यान्न दिव्यं न च साक्षिणः ॥"

याज्ञवल्क्यः।

"आगमो ह्यधिको भोगाद्विना पूर्व्वक्रमागतात्।
आगमः कारणं तत्र भुक्तिः स्तोकापि यत्र न ॥
आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥
योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्।
न तत्र कारणं भुक्तिरागमेन विना कृता ॥"

भूम्यादावागमः पूर्व्वपुरुषक्रमानागतभोगाद्बलवान् अतः क्रमागतभोग आगमाद्बलवान्। तथा च बृहस्पतिः।

"अनुमानात् गुरुः साक्षी साक्षिभ्यो लिखितं गुरु।
अव्याहता त्रिपुरुषी भुक्तिस्तेभ्यो गरीयसी ॥"

त्रिपुरुषभोगमाह व्यासः।

"प्रपितामहेन यद्भुक्तं तत्पुत्रेण विना च तम्।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपूरुषः।
पिता पितामहो यस्य जीवेच्च प्रपितामहः।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥"

आगमोऽपि बलवान्न भवति यत्र स्तोकापि भुक्तिर्नास्ति। तथा च नारदः।

"विद्यमानेऽपि लिखिते जीवत्स्वपि च साक्षिषु।
विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम् ॥"

इति दीपकलिका ॥

यत्र वादिनोः स्वस्वागमबलप्रवृत्तौ आगमयोश्च पूर्व्वापरभावो नास्ति तत्र यस्य भुक्तिस्तस्यागमो बलीयान् न त्वन्यस्येत्यर्थः इति मिताक्षरा ॥ अर्थादुभयागमपौर्व्वापर्य्यनिश्चयस्तत्र।

"सर्व्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया।
आधौ प्रतिग्रहे क्रीते पूर्व्वा तु बलवत्तरा ॥"

इति याज्ञवल्क्यवचनान्निर्णयः।

आगमस्त्विति आ सम्यक् गम्यते प्राप्यते स्वीक्रियते येन स आगमः क्रयादिरिति व्यवहारमातृका ॥ आगमः साक्षिपत्रादिकमिति दीपकलिका ॥ आगमो धनोपार्ज्जनोपायः क्रयादिरिति मैथिलाः ॥ तत्रान्येनाभियुक्तस्तत्कृतमागमं समुद्धरेत् तत्पुत्रपौत्रौ नागममुद्धरेतां किन्तु भुक्तिरेव। तत्र प्रमाणं विशेषयति बृहस्पतिः।

"आहर्त्ता शोधयेत् भुक्तिमागमञ्चापि संसदि।
तत्सुतो भुक्तिमेवैकां पौत्रादिषु न किञ्चन ॥"

इदं शूलपाणिधृतं तत्पुत्रादिनं किञ्चनेति मैथिलधृतम्। आहर्त्ता अर्ज्जनकर्त्ता अत्र पुत्रस्य भुक्तिशोधनमात्रम् ॥*॥ भुक्तिशोधनमाहतुर्व्यासकात्यायनौ।

"सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः।
प्रत्यर्थिसन्निधानश्च भोगः पञ्चाङ्ग इष्यते ॥"

इष्यते प्रमाणत्वेन। सागमः क्रयादियुक्तः। एष च भूमिविषयकविंशतिवर्षधनविषयकदशवर्षान्यूनकालभोगपरः। योऽभियुक्त इत्यादि यो भोगे क्रियमाणे परेणाभियुक्तः सन् परेतो मृतः स्यात्तन्नागममुद्धृतवान् तदा तत्पुत्रादिरागममुद्धरेत्। तथा च नारदः।

"अथारूढविवादस्य प्रेतस्य व्यवहारिणः।
पुत्रेण सोऽर्थः संशोध्यो न तु भोगो निवर्त्तयेत् ॥"

विवादे सति शोधः। भोगः केवलभोगः। तथा च स एव। आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा इति एष सविवादभोगः बहुक्लेशपरः। तथाविधभोगस्यागमं विनापि प्रामाण्यात्। तथा व्यासः।

"वर्षाणि विंशतिं भुक्ता स्वामिना व्याहता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी।
त्रिपौरुषी तु त्रिगुणा न तत्रान्विष्य आगमः ॥"

एतद्वचनमसमक्षभोगविषयकमिति समक्षविंशतिवर्षभोगविषयकवचनेनाविरोधः। एतादृक् स्मृत्युक्तकाल एव। कात्यायनः।

"स्मार्त्तकाले क्रिया भूमेः सागमा भुक्तिरिष्यते।
अस्मार्त्ते त्वागमाभावात् क्रमात्त्रिपुरुषागता ॥"

बहिर्वर्षैकपुरुषभुक्तौ त्रिपुरुषभुक्तिव्यपदेशस्य फलमाह न तत्रेत्यादि। अतएव नारदः।

"अन्यायेन तु यद्भुक्तं पित्रा पूर्व्वतरैस्त्रिभिः।
न तत् शक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम् ॥"

अन्यायेनेत्यत्र आगमेनेति शूलपाणिधृतपाठः। तुरप्यर्थः। पित्रा सह पितरमादाय त्रिभिरित्यर्थः। यत्तु।

"अनागमन्तु यो भुङ्क्ते बहून्यब्दशतानि च।
चौरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥"

इति तस्य वचनं दण्डविधायकं न तत्स्वत्वार्थपरं धर्म्मशास्त्रविरोधात्। तदाह स एव।

"यत्र विप्रतिपत्तिः स्यात् धर्म्मशास्त्रार्थशास्त्रयोः।
अर्थशास्त्रार्थमुत्सृज्य धर्म्मशास्त्रार्थमाचरेत् ॥"

एवमेव शूलपाण्युपाध्यायाः। वस्तुतस्तु अनागममिति दण्डविधायकवचनं क्षोभनरूपभयपरम्।

"क्षोभनञ्च नृपेन्द्राणां न कदाचन जीर्य्यति।
अनागमं भुज्यमानमपि वर्षशतैरपि ॥"

इति स्वत्वनिषेधकवचनान्तरैकवाक्यत्वात्। तत्र विप्रतिपत्तिः स्यादिति वचनस्याप्येतदुदाहरणम्। यत्रैकस्य जयेऽवधार्य्यमाणे मित्रलब्धिरपरस्य जयेऽवधार्य्यमाणे धर्म्मलब्धिस्तत्र।

"हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः।
अतो यतेत तत्प्राप्ताविति वेदविदां मतम् ॥"

इति याज्ञवल्क्योक्तार्थशास्त्रार्थमुत्सृज्य लोभक्रोधविवर्ज्जित इति धर्म्मशास्त्रार्थमवलम्ब्य व्यवहारं पश्येत्। अतएव सभ्यैनावाग्यतव्यं धर्म्मार्थसहितं वचः। इति कात्यायनोक्तम्। भवदेवभट्टास्तु व्यासवचनं प्रतिवादिनोऽसन्निधाने पुरुषैकद्वयभोगाभिप्रायम्। त्रैपुरुषभोगस्य तत्रैव प्रमाणत्वादित्याहुः ॥

अथ भुक्तस्वत्वापवादः।

बृहस्पतिः।

"भुक्तिस्त्रैपुरुषी सिध्येदपरेषां न संशयः।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना च तद्भुक्तं गृहक्षेत्रापणादिकम्।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च।
सुदीर्घेणापि कालेन तेषां तत्तु न सिध्यति ॥"

आपणो विक्रयस्थानं विवाह्यो जामाता ॥*॥

अथ युक्तिः।

नारदः।

"उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः।
केशाकेशि गृहीतश्च युगपत् पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्त्तितः ॥
प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥"

प्रत्यक्षचिह्नैः रुधिरालक्तकादिभिः। पारुष्ये वाक्पारुष्ये। शङ्क्यः। लोमहस्तश्च चौर इति। नारदः।

"अभीक्ष्णं देयमानोऽपि प्रतिहन्यान्न तद्वचः।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥"

यदा धनिकेनाधमर्णिकस्त्रिचतुःपञ्चकृत्वो वा त्वं मे ऋणं धारयसीति पुनः पुनर्देयमानोऽपि न तद्वाक्यं प्रतिहन्ति तदोत्तरकालमनेनाभ्युपगतोऽयमर्थ इत्यवधार्य तमर्थं धनिकाय दापयेदित्यर्थः ॥*॥

अथ शपथः ।

नारदः ।
“सुक्तिव्यवसनात् शपथैरेनमर्द्दयेत् ।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥”
एनं विचार्य्यमाणमर्थं अर्द्दयेत् पीडयेन्निर्णयेदित्यर्थः । अर्थस्य विवादास्पदस्य बलं बहुत्वभावः कालस्य च बलं पुण्यापुण्यत्वं तदपेक्षं यथा स्यादित्यर्थः । भूदूर्व्वाकरत्वस्य पुत्रादिशिरःस्पर्शस्य चाग्ने दर्शनीयत्वात् । अत्र मयैतत् कृतं न वेति प्रतिज्ञासुचार्य्याग्नौ जले वा हस्तं प्रक्षिपेत् । एतन्निक्षिप्ते मम सुकृतं नश्येदिति वा ब्रूयात् । न त्वग्निपरीक्षां जलपरीक्षां वा कुर्य्यात् इत्यभिप्रायवर्णनं युक्तं तस्या महाभियोगविषयकत्वेन शपथसमभिव्याहारानर्हत्वात् । सुकृतादिभिरित्यादिना दूर्व्वासत्यानुपग्रहः । तथा च विष्णुः ।
“सर्व्वेष्वर्थजातेषु मूल्यं स्वर्णं प्रकल्पयेत् ॥”
तत्र कृष्णलोने शूद्रं दूर्व्वाकरं शापयेत् । द्विकृष्णलोने तिलकरं त्रिकृष्णलोने जलकरं चतुःकृष्णलोने स्वर्णकरं पञ्चकृष्णलोने सीतोद्धृतमहीकरं सुवर्णार्द्धोने कोशो देयः शूद्रस्य यथासमये विहिता क्रिया तथा द्विगुणेऽर्थे राजन्यस्य त्रिगुणेऽर्थे वैश्यस्य चतुर्गुणेऽर्थे ब्राह्मणस्येति । कृष्णलः काञ्चनरत्तिका तन्मूल्यादूने कृष्णलोने । एवमन्यत्र । मनुः ।
“सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्व्वैस्तु पातकैः ।
पुत्त्रदारस्य वाप्येवं शिरांसि स्पर्शयेत् पृथक् ॥”
ब्राह्मणेन मयैतत् कृतं न कृतं वेति प्रतिज्ञासुचार्य्य सत्यमिति वक्तव्यम् । तथैव क्षत्रियेण वाहनायुधं स्प्रष्टव्यम् । तथैव वैश्येन गोबीजकाञ्चनानामन्यतमं स्प्रष्टव्यम् । शूद्रेण तु पूर्व्वोक्तं सर्व्वमेव स्प्रष्टव्यं तेषां वृथास्पर्शनस्पर्शनं पातकहेतुत्वात् पातकशब्देन निर्द्देशः । हलायुधोऽप्येवम् ॥ * ॥ दैवक्रियाविषयमाह नारदः ।
“अरण्ये निर्ज्जने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापहरणे चैव दिव्या सम्भवति क्रिया ॥”
बृहस्पतिः ।
“देवब्राह्मणपादांश्च पुत्त्रदारशिरांसि च ।
एते तु शपथाः प्रोक्ता मनुना स्वल्पकारणे ।
साहसेष्वभिशापे च दिव्यानि तु विशोधनम् ॥”
अत्र शपथदिव्ययोः पृथक्प्रतीतेः । शपथे न दिव्यधर्म्माः किन्तु वैधे कर्म्मणि तत्र शौचार्थं स्नानाचमनादिमात्रं कार्य्यम् । दिव्यानि तु दिव्यतत्त्वे कथितानि नात्र लिखितानि । अत्राभियुक्तेन शपथः कर्त्तव्य इत्युत्सर्गः ॥ * ॥ उभयेच्छयाभियोक्तापीत्याह नारदः ।
“अभियोक्ता शिरोवर्त्ती सर्व्वत्रैव प्रकीर्त्तितः ।
इच्छयान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः ॥”
इतरः शपथकर्त्तुभिन्नः । तथा कात्यायनः ।
“आचतुर्द्दशकाहाद्धि यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः ॥”
व्यसनमापत् । घोरमतिपीडाकरम् । तथा च कोशाधिकारे यस्य पश्येदित्यनुवृत्तौ विष्णुः ।
“रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा ।
तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्ययात् ॥”
कात्यायनः ।
“तस्यैकस्य न सर्व्वस्य जनस्य यदि सम्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणमृणं दद्यात् दमञ्च सः ॥
ज्वरातिसारविस्फोटगूढास्थिपरिपीडनम् ।
नेत्रगलरोगश्च तथोन्मादः प्रजायते ।
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥”
तस्यैकस्येति न तु देशव्यापकमरणादिः । मनुः ।
“न वृथा शपथं कुर्य्यात् स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥
कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥”
कामिनीष्विति रहसि कामिनीसन्तोषार्थं वृथाशपथे एवं विवाहसिद्धार्थं गोग्रासार्थं आवश्यकहोमेन्धनार्थं ब्राह्मणरक्षार्थमङ्गीकृतधनादौ । यमः ।
“वृथा तु शपथं कृत्वा कौटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ।
तस्मान्न शपथं कुर्य्यान्नरो मिथ्यावधेप्सितम् ॥”
कौटस्येति प्राणिमात्रोपलक्षणं तद्वधपापेन वृथाशपथकर्त्ता युज्यत इत्यर्थः ॥

अथ निर्णयः ।

तत्र नारदः ।
“यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
स्वयमभ्युपपन्नोऽपि स्वचर्य्यावसितोऽपि सन् ।
क्रियावसन्नोऽप्यर्हति परं सभ्यावधारणम् ।
सभ्यैरवधृतः पश्चात् स शास्यः शास्त्रमार्गतः ॥”
यस्य वादिनः प्रतिवादिनो वा साक्षिण इत्युपलक्षणम् । साक्षिलिखितभुक्तिशपथानां मध्येऽन्यतमप्रमाणं यस्य प्रतिज्ञायाः सत्यत्वप्रतिपादकं स एव जयी अन्यथा पराजित इति प्रत्येतव्यम् । स्वयमभ्युपपन्नः आत्मनैवाङ्गीकृतस्वपराजयः स्वचर्य्यावसितः कन्यस्विदवैवर्ण्यादिना पराजितत्वेनावधृतः । क्रियावसन्नः साक्ष्यादिना प्राप्तपराजयः । परमनन्तरं सभ्यावधारणमर्हति सभासदां मिलितानामयं पराजित इति निर्णयमर्हति । आकाङ्क्षित स शास्त्रविधिना शास्यः ॥ * ॥ निर्णयस्य फलमाह बृहस्पतिः ।
“प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानात् जयी लोके निगद्यते ॥”
जयपत्रस्य लिखनप्रकारमाह स एव ।
“यद्वृत्तं व्यवहारेषु पूर्व्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्व्वोक्तक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने पत्रं जयपत्रं तदुच्यते ॥”
कात्यायनः ।
“अर्थिप्रत्यर्थिवाक्यानि प्रतिसाक्षिवचस्तथा ।
निर्णयश्च तथा तस्य यथा चावधृतं स्वयम् ॥
एतद्यथाक्षरं लेख्यं यथापूर्व्वं निवेशयेत् ।
सभासदश्च ये तत्र धर्म्मशास्त्रविदस्तथा ॥”
ततश्च भाषोत्तरे क्रिया च पक्षसाक्ष्यादिकं निर्णयो जयपराजयावधारणं निर्णयकालावस्थितमध्यस्थाश्चेत्यादिकं सर्व्वं लेखनीयं निरूपणस्य सम्यक्त्वप्रदर्शनार्थम् । तथाहि भाषोत्तरलिखनं हेत्वन्तरेण पुनर्न्यायप्रत्यवस्थाननिषेधार्थं नहि न गृहीतमिति मिथ्योत्तरेण पराजितस्य पुनः परिशोधितं मयेति प्रत्यवस्थानं सम्भवति । प्रमाणलिखनन्तु पुनः प्रमाणान्तरेण न्यायनिषेधार्थम् । तदाह कात्यायनः ।
“क्रिया बलवती त्यक्ता दुर्ब्बला योऽवलम्बते ।
स जयेऽवधृतः सभ्यैः पुनस्तां नाप्नुयात् क्रियाम् ॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वापि पूर्व्वमावेदितं न चेत् ॥
यथा पक्केषु धान्येषु निष्फलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलन्तथा ॥”
निर्णयोत्तरकृत्यमाह मनुः ।
“अर्थेऽपव्ययमानन्तु कारणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशञ्च शक्तितः ॥”
अपव्ययमानं अपलपन्तं कारणेन साक्ष्यादिप्रमाणेन । याज्ञवल्क्यः ।
“ज्ञात्वापराधं देशञ्च कालं बलमथापि वा ।
वयः कर्म्म च वित्तञ्च दण्डं दण्ड्येषु दापयेत् ॥”
मनुः ।
“तीरितं चानुशिष्टञ्च यत्र क्वचन सम्भवेत् ।
कृतं तद्धर्म्मतो विद्यात् न तत् भूयो निवर्त्तयेत् ॥”
अनुशिष्टं साक्ष्यादिनिर्णीतं अतएव तीरितं प्राड्विवाकादिभिः समापितम् । तद्विवादपदं पुनर्न निवर्त्तयेदित्यर्थः । यत्र तीरितानुशिष्टयोरप्यधर्म्मकृतत्वं प्रत्यवतिष्ठते । तत्र पुनर्न्यायदर्शनमाह नारदः ।
“तीरितं चानुशिष्टञ्च यो मन्येत विधर्म्मतः ।
द्विगुणं दण्डमादाय तत् कार्य्यं पुनरुद्धरेत् ॥”
असद्विचारे तु विचारान्तरमाह स एव ।
“असाक्षिकन्तु यद्दृष्टं विमार्गेण च तीरितम् ।
असम्मतमतैर्दृष्टं पुनर्दर्शनमर्हति ॥”
असाक्षिकमित्यप्रमाणकोपलक्षणम् । याज्ञवल्क्यः ।
“दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्वचर्य्यावसितानान्तु नास्ति पौनर्भवो विधिः ॥”
साक्षिवचनेन सभ्यावधारणेन च प्राप्तावसादानां पुनर्न्यायदर्शनम् । स्वव्यापारेण विवक्षाभावादिना प्राप्तावसादानान्तु नास्ति पुनर्न्यायः । इति बृहस्पतिरपि ।

"पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य ग्रह्यते वादो न स्ववाक्यजितस्य च ॥"
मनुः ।
"बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत् ॥"
याज्ञवल्क्यः ।
"बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्त्तयेत् ।
स्त्रीनक्तमन्तरागारवहिर्ग्रामकृतांस्तथा ॥
मत्तोन्मत्तार्त्तव्यसनिबालभीतादियोजितः ।
असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥"
उपाधिश्छलमिति शूलपाणिः । उपाधिर्भयादिरिति विज्ञानेश्वरः । तन्मते भीतादियोजित इत्युक्तवचनेन पौनरुक्त्यम् । वहिर्ग्रामः वहिर्देशः । मत्तो मद्यादिना । उन्मत्तो वातादिना । व्यसनी द्यूताद्यासक्तः । असम्बन्धो वादिनियुक्तव्यतिरिक्त उदासीनः । आदिपदादस्वतन्त्रदासपुत्रादेर्ग्रहणम् । तथा च नारदः ।
"अस्वतन्त्रोऽपि हि यत् कार्य्यं कुर्य्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वातन्त्र्यस्य हेतुतः ॥
कामक्रोधाभिभूता वा भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥
तथा दासकृतं कार्य्यमकृतं परिचक्षते
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्त्रेण च कृतं कार्य्यं यत् स्यादस्वच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासपुत्त्रौ च तौ समौ ॥"
एतच्च कुटुम्बभरणातिरिक्तविषयम् ।
"कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥"
इति मनुवचनात् कुटुम्बमवश्यभरणीयम् । अध्यधीनः परतन्त्रः पुत्रदासादिः । व्यवहारकृत्यादिकं ज्यायान् स्वतन्त्रः न विचालयेत् अनुमन्येत । तथा च नारदः ।
"स्वातन्त्र्यन्तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।
अस्वतन्त्राः प्रजाः सर्व्वाः स्वतन्त्रः पृथिवीपतिः ॥
अस्वतन्त्रः स्मृतः शिष्य आचार्य्यस्य स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः सर्व्वाः पुत्त्रा दासाः परिग्रहाः ॥
स्वतन्त्रस्तत्र तु गृही यस्य तत् स्यात् क्रमागतम् ।
गर्भस्थैः सदृशो ज्ञेयः अष्टमाद्वत्सरात् शिशुः ॥
बाल आषोडशाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे च पूर्व्वजः ॥"
परिग्रहा अनुजीविप्रभृतयः । तथा च बृहस्पतिः ।
"पित्रव्यभ्रातृपुत्त्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥"
कात्यायनः ।
"कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा ।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत् ॥
कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत् कृतम् ।
एतत् सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥"
प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुणा दातव्यमिति रत्नाकरः ॥ बृहस्पतिः ।
"यः स्वामिना नियुक्तोऽपि धनाय व्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत् कृतं सर्व्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तन्न विसंवदेत् ॥"
इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं व्यवहारतत्त्वं समाप्तम् ॥ ० ॥

व्यवहारज्ञः, पुं, ( व्यवहारं जानातीति । ज्ञा + कः ।) प्राप्तव्यवहारः । (साबालक इति भाषा ।) स तु षोड़शवर्षानन्तरं भवति । यथा,—
"बाल आषोड़शाद्वर्षात् पौगण्डोऽपि निगद्यते ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥"
इति व्यवहारतत्त्वधृतनारदवचनम् ॥

व्यवहारज्ञानरि, त्रि ॥

व्यवहारदर्शनं, क्ली, (व्यवहारस्य दर्शनम् ।) न्यायदर्शनम् । विचारकरणम् । इति मिताक्षरा ॥

व्यवहारपदं, क्ली, ( व्यवहारस्य पदम् । ) वादिना राज्ञि निवेदनम् । ( नालिश इति भाषा ॥ ) यथा, याज्ञवल्क्यः ।
"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥"
स्मृतिसदाचारवहिर्भूतेन वर्त्मना परैरर्थनः शरीरतो वा पीड़ितश्चेद्राजनि निवेदयेत् तद्व्यवहारदर्शनस्थानम् । चेदित्यनेन यदिति मे शिताः । आवेदयति चेदित्यनेन स्वयं विवादोत्थानं राज्ञा न कर्त्तव्यमिति शूलपाणिमहामहोपाध्यायाः ॥ राज्ञीति व्यवहारप्रदर्शकपरं तथा च बृहस्पतिः ।
"राजा कार्य्याणि संपश्येत् प्राड्विवाकोऽथ वा द्विजः ॥"
कात्यायनः ।
"सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
स्वयं स राजा विनुयात् तेषां जयपराजयौ ॥
यदा कार्य्यवशादाजा न पश्येत् कार्य्यनिर्णयम् ।
तदा नियुञ्ज्यात विद्वांसं ब्राह्मणं वेदपारगम् ॥
यदि विप्रो न विद्वान् स्यात् क्षत्त्रियं तत्र योजयेत् ।
वैश्यं वा धर्म्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥"
स विनीतवेशः । मनुः ।
"जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्म्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन ॥"
व्यासः ।
"द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह ।
तस्य प्रक्षुभ्यते राज्यं बलं कोषश्च नश्यति ॥
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः ।
दुग्धां गां कः परित्यज्यार्थेयेच्छीलवतीं खरीम् ॥"
इति व्यवहारतत्त्वम् ॥

व्यवहारपादः, पुं, ( व्यवहारस्य पादः । ) व्यवहारांशः । यथा । अथ व्यवहारपादनिर्णयः । तत्र बृहस्पतिः ।
"पूर्ब्बपक्षः स्मृतः पादो द्विपादश्चोत्तरः स्मृतः ।
क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृतः ॥"
इति व्यवहारतत्त्वम् ॥
अपि च ।
"परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु ।
वाक्यान्न्यायाद्व्यवस्थानं व्यवहार उदाहृतः ॥
भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः ।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥"
इति मिताक्षरा ॥

व्यवहारमातृका, ( व्यवहारस्य मातृकेव । ) व्यवहारोपयोगिक्रिया । तद्यथा । व्यवहारदर्शनम् १ व्यवहारलक्षणम् २ सभासदः ३ प्राड्विवाकादिः ४ व्यवहारविषयः ५ राज्ञः कार्य्यानुत्पादकत्वम् ६ कार्य्यार्थिनि प्रश्नः ७ आह्वानानाह्वाने ८ आसेधः ९ प्रत्यर्थ्यागते लेख्यादिकर्त्तव्यता १० पक्षविधौ हीनः ११ कीदृशं लेख्यं १२ पक्षाभासाः १३ अनादेयाः १४ आदेयः १५ नियुक्तजयपराजये वादिजयपराजयौ १६ शोधितलेख्यनिवेशनम् १७ उत्तरावधिशोधनम् १८ शोधिते पक्षारूढ़े उत्तरकर्त्तव्यम् १९ उत्तरलक्षणम् २० सत्योत्तरलक्षणम् २१ मिथ्योत्तरलक्षणम् २२ प्रत्यवस्कन्दनोत्तरम् २३ प्राङ्न्यायोत्तरम् २४ उत्तराभासः २५ सङ्करानुत्तरम् २६ प्रत्यर्थिक्रियानिर्देशः २७ उत्तरे पत्रेऽभिनिवेशिते साधननिर्देशः २८ तत्सिद्धौ सिद्धिः २९ चतुष्पाद्व्यवहारः ३० । इति मिताक्षरायां व्यवहारमातृका ॥

व्यवहारमार्गः, ( व्यवहारस्य मार्गः । ) व्यवहारविषयः । व्यवहारपदम् । इति मिताक्षरा ॥

व्यवहारविधिः, पुं, ( व्यवहारस्य विधिः । ) व्यवहारस्य विधानम् । धर्म्मशास्त्रम् । इति मिताक्षरा ॥

व्यवहारविषयः, पुं, ( व्यवहारस्य विषयः ।) व्यवहारपदम् । तत् अष्टादशविधम् । यथा । ऋणादानम् १ निक्षेपः २ अस्वामिविक्रयः ३ सम्भूयसमुत्थानम् ४ दत्तस्यानपकर्म्म ५ वेतनादानम् ६ संविदो व्यतिक्रमः ७ क्रयविक्रयानुशयः ८ स्वामिपालयोर्विवादः ९ सीमाविवादधर्म्मः १० वाक्पारुष्यम् ११ दण्डपारुष्यम् १२ स्तेयम् १३ साहसम् १४ स्त्रीसंग्रहणम् १५ स्त्रीपुंधर्म्मः १६ विभागः १७ द्यूतम् १८ । इति मानवे ८ अध्यायः ॥

व्यवहारस्थानं, क्ली, ( व्यवहारस्य स्थानम् । ) व्यवहारपदम् । व्यवहारविषयः । इति मिताक्षरा ॥

व्यवहारिकः, त्रि, (व्यवहारमर्हतीति । व्यवहार+ठक् ।) व्यवहारयोग्यः । यथा । इयं बुद्धिः ज्ञानेन्द्रियैः सहिता सती विज्ञानमयकोषो भवति । अयं कर्त्तृत्वभोक्तृत्वाभिमानित्वेन इहलोकपरलोकगामी व्यवहारिकोजीव उच्यते । इति वेदान्तसारः ॥

व्यवहारिका, स्त्री, (व्यवहारेण चरतीति ठक् । स्त्रियां टाप् ।) लोकयात्रा । सम्मार्ज्जनी । इङ्गुदवृक्षः । इति मेदिनी ॥

व्यवहारी, [न्] त्रि, (व्यवहारोऽस्यास्तीति । इनिः ।) व्यवहारविशिष्टः । व्यवहारशब्दादस्त्यर्थे इन्प्रत्ययेन निष्पन्नमिदम् ॥

व्यवहार्य्यः, त्रि, (वि+अव+हृ+ण्यत् ।) व्यवहरणीयः । व्यवहर्त्तव्यः । वि-अव-पूर्व्वहृधातोर्ण्यत्प्रत्ययेन निष्पन्नमेतत् ॥ (यथा, याज्ञवल्क्ये । ३ । २२६ ।
"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् ।
कामतो व्यवहार्य्यस्तु वचनादेव जायते ॥")

व्यवहितः, त्रि, (वि+अव+धा+क्तः ।) व्यवधानविशिष्टः । यथा,—
"कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयेत् क्रियाम् ।
उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं मतम् ॥"
इति मुग्धबोधटीकायां रामतर्कवागीशः ॥

व्यवायं, क्ली, (वि+अव+अय+अच् ।) तेजः । इति मेदिनी ॥

व्यवायः, पुं, (विशेषेण अवायनं अधः संश्लेषणम् । वि+अव+इ+घञ् ।) मैथुनम् । इत्यमरः ॥ (तथा, वैद्यके ।
"व्यायामञ्च व्यवायञ्च स्नानं चंक्रमणं तथा ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥")
अन्तर्द्धानम् । इति मेदिनी ॥ (यथा, पाणिनौ । "अड्भ्यास व्यवायेऽपि ।" ६ । १ । १३६ ।) शुद्धिः । इति धरणिः ॥ (परिणामे । तथा, भागवते । ८ । ६ । ११ ।
"पश्यन्ति युक्ता मनसा मनीषिणो
गुणव्यवायेऽप्यगुणं विपश्चितः ॥")

व्यवायी, [न्] पुं स्त्री, (व्यवैतुं शीलमस्य । णिनिः ।) कामुकः । यथा,—
"श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य च ।
व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन् ॥"
इति श्राद्धतत्त्वम् ॥
(व्यवधानकर्त्ता । यथा, पाणिनौ । "व्यवायिनोऽन्तरम् ।" ६ । २ । १६६ । "व्यवायी व्यवधाता ।" इति काशिका ॥)

व्यसनं, क्ली, (वि+अस+ल्युट् ।) विपत् । (यथा महाभारते । १२ । २२७ । ७ ।
"पुत्त्रदारैः सुखैश्चैव वियुक्तस्य धनेन वा ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ! ॥")
भ्रंशः । (यथा, मनौ । ७ । ६४ ।
"वायुधव्यसनप्राप्तं क्लान्तं नातिपरीक्षितम् ॥")
कामजकोपजदोषः । इत्यमरः ॥ (यथा, कथासरित्सागरे । ११ । २५ ।
"तच्चैव व्यसनानि त्वं सुखेन हि परैर्नृपाः ।
सौदन्तस्तेषु गम्यन्ते खातेष्विव वनद्विपाः ॥"
यथा च भागवते । ४ । २६ । २६ । ४ ।
"विहाय जाया मतदर्हा मृगव्यसनलालसः ॥"
"व्यसनं भोगासक्तिः ।" इति श्रीधरः ॥) विपत्तिः । भ्रंशोऽपायः पतनम् । मृगयाद्यूतस्त्रीमद्यपानस्वरूपे चतुर्व्वर्गे प्रसक्तिः कामजो दोषः । इच्छाप्रभवत्वात् । वाक्पारुष्यं अर्थपारुष्यञ्चेति त्रिवर्गः कोपजो दोषः । कोपप्रभवत्वात् । एषु व्यसनम् । व्यस्यति श्रेयोमार्गात् व्यसनं कर्त्तरि अनट् । भ्रंशे तु भावे । इति भरतः ॥ (अत्यासक्तिः । यथा, कथासरित्सागरे । ११ । ३२ ।
"शिथिलो ललनकेलासनिवासव्यसनो हरः ॥")
अशुभम् । दैवानिष्टफलम् । पापम् । निष्फलोद्यमः । इति मेदिनी ॥ * ॥ राज्ञां व्यसनानि यथा,
"मृगयाक्षाः स्त्रियः पानं वाक्पारुष्यार्थदूषणे ।
दण्डपारुष्यमित्येतद्धेयं व्यसनसप्तकम् ॥"
इति हेमचन्द्रः ॥ * ॥
व्यसनासक्त दोषो यथा,—
"एकैकविषयासक्ताः सर्व्वे मृत्युवशं गताः ।
यः पुनः संहतान् सेवेत् विषयान् विषयी नरः ।
स पतेन्महदैश्वर्य्याच्छिन्नमूल इव द्रुमः ॥
स्त्रियः पानं दिवास्वप्नं तथा वादित्रनर्त्तनम् ।
द्यूताटनन्मृगागेयकामजानि तथा परे ॥
दण्डैर्वाचा ईर्ष्यासूया क्रोधपैशुन्यसाहसम् ।
अर्थदूषणक्रोधोऽर्थे अष्टकोपं विनाशकृत् ॥
देवा विद्याधरा यक्षाः किन्नरोरगमानुषाः ।
पन्नगाः पक्षिणः सर्व्वे विषये निधनं गताः ॥
एवं विवेकमासक्तं बुद्धा घोरं नराधिप ।
धर्म्ममार्गं समास्थाय विषयैः सन्निवेश्यताम् ॥"
इति देवीपुराणे ८ अध्यायः ॥

व्यसनार्त्तः, त्रि, (व्यसनेनार्त्तः ।) दैवीमानुषीपीडार्त्तः । तत्पर्य्यायः । उपरक्तः २ । इत्यमरभरतौ ॥

व्यसनी, [न्] त्रि, (व्यसनमस्यास्तीति । व्यसन+इनिः ।) व्यसन-विशिष्टः । (यथा, शिशुपालवधे । २ ।
"चिरस्य मित्रव्यसनी सुदमो दमघोषजः ॥")
तत्पर्य्यायः । पञ्चभद्रः २ विप्लुतः ३ । इति हेमचन्द्रः ॥

व्यस्तः (वि+अस्+क्तः ।) व्याकुलः । व्याप्तः । इति मेदिनी । प्रत्येकम् । पृथक् पृथक् । यथा, विश्वामित्रः ।
"कृच्छ्रचान्द्रायणादीनि शुद्धाभ्युदयकारणम् ।
प्रकाशे च रहस्ये च संशयेऽनुक्तकेऽस्फुटे ॥
प्राजापत्यः सान्तपनः शिशुकृच्छ्रः पराककः ।
अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रातिकृच्छ्रकः ॥
महासान्तपनः शुद्धौ तप्तकृच्छ्रस्तु पावनः ।
जलोपवासकृच्छ्रस्तु ब्रह्मकूर्च्चस्तु शोधकः ॥
एते व्यस्ताः समस्ता वा प्रत्येकमेकशोऽपि वा ।
पातकादिषु सर्व्वेषु पातकेषु प्रयत्नतः ।
कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये ।"
इति प्रायश्चित्ततत्त्वम् ।
विपरीतः । यथा,—
"प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥"
इति तिथ्यादितत्त्वम् ॥

व्यस्तपदं, क्ली, (व्यस्तं पदं यस्मिन् ।) व्यवहाराभियोगे पदान्तरेणोत्तरम् । यथा । सुवर्णशताभियोगे अनेनाहन्ताड़ित इति । इति मिताक्षरा ॥

व्यस्तारं, क्ली, हस्तिमदप्रयोगः । इति त्रिकाण्डशेषः ॥

व्याकरणं, क्ली, (व्याक्रियन्ते अर्था येनेति । वि+आ+कृ+ल्युट् ।) वेदाङ्गविशेषः । इति शब्दरत्नावली ॥ तत्र साध्यसाधनकर्त्तृकर्म्मक्रियासमासादिनिरूपणम् । तस्य व्युत्पत्तिर्यथा । व्याक्रियन्ते व्युत्पाद्यन्ते साधुशब्दा अस्मिन् अनेनेति वा । इति दुर्गादासः ॥ * ॥
"अथ व्याकरणं वक्ष्ये कात्यायन समासतः ।
सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥
सुप्तिङन्तं पदं ख्यातं सुपः सप्तविभक्तयः ।
स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मके ॥
संबोधने च लिङ्गादावुक्ते कर्म्मणि कर्त्तरि ।
अर्थवत् प्रातिपदिकं धातुप्रत्ययवर्ज्जितम् ॥
अमौट्शसो द्वितीया स्यात् तत्कर्म्म क्रियते च यत् ।
द्वितीया कर्म्मणि प्रोक्ता उक्तानुक्तविभेदतः ॥
टा भ्यां भिसस्तृतीया स्यात् करणे कर्त्तरीरिता ।
येन क्रियते करणं तत् कर्त्ता यः करोति सः ॥
ङे भ्यां भ्यसश्चतुर्थी स्यात् संप्रदाने च कारके ।
यस्मै दित्सा धारयते रोचते संप्रदानकम् ॥
पञ्चमी स्यात् ङसि भ्यां भ्यो ह्यपादाने च कारके ।
यतोऽपैति समादत्ते अपादानं भयं यतः ॥
ङसोसामश्च षष्ठी स्यात् स्वामिसम्बन्धमुख्यके ।
ङ्योसुप्सुपश्च सप्तमी स्यात् सा चाधिकरणे भवेत् ॥
आधारश्चाधिकरणं रक्षार्थानां प्रयोगतः ।
ईप्सितं चानीप्सितं यत्तदपादानकं स्मृतम् ॥
पञ्चमी पर्य्यपाङ्योग इतरर्त्तेऽन्यदिङ्मुखे ।
एनयोगे द्वितीया स्यात् कर्म्म प्रवचनीयकैः ॥
लक्षणवीप्सेत्थंभूतेऽभिभागे च परिप्रती ।
अन्तरेषु सहार्थे च हीनेऽनूपश्च कथ्यते ॥
द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्म्मणि ।
अप्राणे हि विभक्ती द्वे मन्यकर्म्मण्यनादरे ॥
नमःस्वस्तिस्वधास्वाहालंवषड्योग ईरिता ।
चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥
तृतीया सहयोगे स्यात् कुत्सितेऽङ्गे विशेषणे ।
काले भावे सप्तमी स्यादेतैर्योगे च षष्ठ्यपि ॥
स्वामीश्वराधिपतिभिः साक्षिदायादसूतकैः ।
निर्द्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके ॥
स्मृत्यर्थकर्म्मणि तथा करोतेः प्रतियत्नके ।

हिंसार्थानां प्रयोगे च कृति कर्म्मणि कर्त्तरि ।
न कर्तृकर्म्मणोः षष्ठी निष्ठादौ प्रतिपादिता ।
द्विविधं प्रातिपदिकं प्रातिपदिकमजन्तकम् ॥ * ॥
भुवादिभ्यस्तिङो लः स्याल्लकारा दश वै स्मृताः ।
तिप्तसन्ति प्रथमो मध्यः सिप्थस्थोत्तमपूरुषः ॥
मिप्वस्मसः परस्मै तु पदानाञ्चात्मनेपदम् ।
तातांतान्ताः प्रथमो मध्यस्थासाथांध्वमुत्तमः ॥
आदेशा इवहिमहन्ता अनिषादपि धातुतः ।
नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवेत् ॥
मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ।
भुवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तु धातवः ॥
लड़ीरितो वर्त्तमाने स्मेनातीते च धातुतः ।
भूतानद्यतने लङ् च लोङाशिषि च धातुतः ॥
विध्यादावेवानुमतौ लिङ्विधिर्मन्त्रणे भवेत् ।
निमन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु तथाशिषि ॥
लिड़तीते परोक्षे स्याल्लङ् लुङ् लट् लृङ् भवि-
ष्यति ।
स्वादद्यतने लुट् च भविष्यति च धातुतः ॥
धातोर्लिङ्क्रियाभिपत्तौ लिडर्थे लोट् प्रकीर्त्तितः ।
कृतस्त्विप्यपि वर्त्तन्ते भावे कर्म्मणि कर्त्तरि ।
घ्यण्ण्यानतव्यडुणयडनीयक्त्वक्तचादयः ॥”
इति गारुडे कुमारव्याकरणे २०६ अध्यायः ॥
कुमार उवाच ।
“सिद्धोदाहरणं वक्ष्ये संहितादि परस्परम् ।
दिप्राप्तं सागतान् धौद्रं स्तत्तमं स्यात् पितृषभः ॥
होतृकारो विश्रुतेयं लाङ्गलीषा मनीषया ।
गङ्गोदकं तवल्कार ऋणार्णं प्रार्णमित्यपि ॥
शीतार्त्तश्च तवल्कारः सैन्द्री सौकार इत्यपि ।
मध्वासनश्च पित्रर्थे नन्वयं नाप्ययोजयेत् ॥
नायको लवणं नावस्त एते तेन ईश्वराः ।
देवीगृहमथोऽत्रत्र यथुरेहि पट् इमौ ॥
अमी अश्वाः षडश्चेति तनुराखुस्तृणानि च ।
तच्चरेत्तन्नु नातीति तच्छलं तच्छ्मशानकम् ॥
सुगणत्र पचत्रत्र भवांश्छादयतीति हिक् ।
भवांष्टङ्कारकश्चैव भवांस्तरति संस्थितम् ॥
भवाँल्लिखति तान्स्ते भवाञ्छरोऽप्यशीदृशम् ।
भवाञ्छीनं त्वन्तरसि त्वङ्करोषि सदाधेनम् ॥
कश्चरेत् कष्ठकारेण कः कुर्य्यात् कः खले
स्थितः ।
कः शेते चैव कः षण्डः कोऽर्थः को याति
गौरवम् ॥
क इहार्थस्त एवाहुर्देवा आहुश्च भो व्रज ।
प्रभुर्विष्णुर्व्रजति च गौष्यतिश्चैव धूष्पतिः ॥
तस्मादेष व्रजेत् स स्यात् कर्त्तव्यमुगच्छति ।
कुटीच्छाया तथाच्छाया माधवोऽर्थ्यं तर्थ-
इशाः ॥
समासाः षट् पुराणे ये सहिताः कर्म्मधारयः ।
द्विगुस्त्रिवेदी ग्रामश्वा अयं तत्पुरुषः स्मृतः ॥
तत्कृतश्च तदर्थं च वृकभीतिश्च यत्नतम् ।
ज्ञानदक्षिणकृतत्वज्ञो बहुव्रीहिरथाव्ययी ॥
भावोऽधिस्त्रि यथोक्तित्वं द्वन्द्वो देवर्षिमानवाः ।
सहिताः पाण्डवः शैवो भागश्च नप्तादयः ॥
देवाग्निषत्खिपत्यं शुक्रोद्दस्वयं भुवः पिता ।
ना प्रशास्ता च रा गौर्न्नौ क्रुङ्राजन्ताश्च
पुंस्यपि ॥ * ॥
हलन्ताश्चाश्वयुक् प्राङ्मुङ् हनुश्चाथाग्मताविधः ।
आत्मा राजा युवा पन्थाः पूषब्रह्महणौ शशी ॥
विड्वेधा उशनानङ्वान् मधुलिट् काष्ठतट्
तथा । * ।
वनवार्य्यस्थिवस्तूनि जगत्सामाहनी तथा ।
कर्म्म सर्पिर्वपुस्तेज अजन्तान्ता नपुंसके ॥ * ।
जाया जरा नदी लक्ष्मीः श्रीः स्त्री भूमिर्वधू-
रपि ।
भूः पुनर्भूस्तथा धेनुः स्वसा माता च नौः स्त्रियः ।
वाक् स्रक् धी सुत् क्षुधः पामा युवतिः ककुभ-
स्तथा ॥
द्यौर्द्युतिः प्रावृषश्चैव सुमन उष्णिहौ स्त्रियाम् ।
गुणद्रव्यक्रियायोगात्त्रिलिङ्गाश्च वदामि ते ॥
शुक्लः कीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः ।
पटुः कमलभूः कर्त्ता सुमनो बहवः सुनौः ॥
सत्यो नाम्रस्तथा ध्वंसो मधुभच्चमदीर्घपात् ।
धनार्थी च सुहृत् सोमौ वागङ्कश्चादिकस्तथा ॥
सुवर्णं बहुपाच्छ्वेता चैषा त्वमहुहा तथा ॥ * ।
सर्व्वविश्वोभये चोभौ अन्यान्तरेतराणि च ।
इतरइतरे नेमः समोऽथ सिम इत्ययम् ।
पूर्व्वापरावराश्चैव दक्षिणश्चोत्तराधरौ ।
अपरश्चान्तरोऽप्येतद् यत्तत्किमदसो इयम् ।
युष्मदस्मत् प्रथमश्चरमाल्पे तथार्द्धकं ।
एकः कतिपयो द्वौ च त्रयः सर्व्वादयस्तथा ॥ * ।
भुविविदिपविक्रन्दिधाय्येश्च ययतिः स्तिः ॥
गौर्व्विद्या जुहोतिश्च जहातिश्च दधात्यपि ।
दीव्यति स्तयतिर्वहि पुचशिष्टश्चिनोत्यपि ॥
चटिश्चास्तृयति स्तपि रुधि गुल्मौ स्तनौ ननिः ।
तमिः करोति क्रीणाति हृणोतिर्न्नुति वर्त्तति ॥
कलौडलपराश्चैवा धातवश्च युता तथा । * ।
भवत् भवान् भवन्तौ च श्रेयं कर्त्तव्यमेव च ।
कार्य्यं कृतश्च कृत्वा च प्रत्ययाः स्युस्तथापरे ।
सूर्य्याहरौ सुरा सन्ति देवविप्रवनान्यण ॥
नरेण कार्य्यं वेदैश्च क्रियते देहि भोजनम् ।
हिताय च वरिष्ठाभ्यां मा तेभ्योऽस्तु समागतः ॥
तीर्थात्तथाश्रमाभ्याश्च मत्येभ्यः श्वशुरस्य च ।
गन्धर्व्वयोः करणानाञ्च ज्ञानं सिद्धमहात्मयोः ॥
ज्ञानवत्स्वेषु चैत्यवमस्य नेया यथामति ।
सर्व्वे तिष्ठन्ति सर्व्वस्मै सर्व्वस्मात् सर्व्वतो गतः ॥
सर्व्वेषाञ्चैव सर्व्वस्मिन्नेवं विश्वादयस्तथा ।
पूर्व्वः पूर्व्वाश्च पूर्व्वस्मात् पूर्व्वस्मिन् पूर्व्व इत्यलम् ।
सूत उवाच ।
सुप्तिङन्तं सिद्धरूपं नाममात्रेण दर्शितम् ।
कात्यायनः कुमारात्तु ज्ञात्वा विस्तरमब्रवीत् ॥”
इति गारुडे कुमारव्याकरणं २१० अध्यायः ॥ *
एतद्भिन्नं अग्निपुराणे कार्त्तिकेयोक्तव्याकरण-
मस्ति । एवं महेशकृतमाहेशव्याकरणं पाणिनि-
मुनिकृतपाणिनीयव्याकरणं शर्व्ववर्म्मकृतकलाप-
व्याकरणं क्रमदीश्वरकृतसंक्षिप्तसारव्याकरणं
पद्मनाभदत्तकृतसुपद्मव्याकरणं वोपदेवकृतमुग्ध-
बोधव्याकरणं गोस्वामिकृतहरिनामामृतव्या-
करणं भट्टोजीदीक्षितकृतसिद्धान्तकौमुदीव्याक-
रणं अनुभूतिस्वरूपाचार्य्यादिकृतसारस्वतादि-
व्याकरणानि च सन्ति ॥ * ॥ (विस्तारः । यथा,
महाभारते । १२ । २५१ । ११ ।
“व्यवसायात्मिका बुद्धिर्म्मनो व्याकरणात्मकम् ॥”)

व्याकुलः, त्रि, (विशेषेण आकुलः ।) शोकादिभि-
रितिकर्त्तव्यताशून्यः । तत्पर्य्यायः । विह्वलः २ ।
इत्यमरः ॥ (यथा, महाभारते । ५।१७७।२५ ।
“वरोह सा शोकवती वाष्पव्याकुललोचना ॥”
उपद्रुतः । यथा, भागवते । १ । ३ । २८ ॥
“एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥”)

व्याकुलात्मा, [न्] त्रि, ( व्याकुलः आत्मा यस्य । )
शोकाभिहतचित्तः । यथा,—
“भो हृक्षाः पर्व्वतस्था बहुकुसुमयुता वायुना
घूर्णमाना
रामोऽहं व्याकुलात्मा दशरथतनयः पृच्छते
शोकदग्धः ।
बिम्बोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी
सुमध्या
सा सीता केन नीता मम हृदयगता केन वा
कुत्र दृष्टा ॥”
इति महानाटकम् ॥

व्याकृतिः, स्त्री, ( विशिष्टा आकृतिः । ) भङ्गिः ।
इति हलायुधः ॥

व्याकोशः, त्रि, (व्याकुशति प्रस्फुटतीति । वि +
आ + कुश + कः । ) विकशितः । इत्यमर-
टीकायां रामाश्रमः ॥ (यथा, माघे । ४ । ४६ ।
“दोषापि नूनमहिमांशुरसौ किलेति
व्याकोशकोकनदतां दधते नलिन्यः ॥”
भावे घञ् । प्रस्फुटनम् । यथा, मृच्छकटिके ।
३ अङ्के ।
“पद्मव्याकोशं भास्करं बालचन्द्रं
वापीविस्तीर्णं स्वस्तिकं पूर्णकुम्भम् ।
तत्कस्मिन् देशे दर्शयाम्यात्मशिल्पं
दृष्ट्वा श्वो यद्विस्मयं यान्ति पौराः ॥”)

व्याकोचः, त्रि, ( व्याकुचति सङ्कोचभावाद्वहि-
र्निःसरतीति । वि + आ + कुच + कः । ) प्रफुल्लः ।
इत्यमरः ॥ (यथा, महाभारते । ७।३०। २२ ।
“तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोचपद्माभिमुखो नलो निवराध सायकैः ॥”)

व्याख्या, स्त्री, (व्याख्यानमिति । वि + आ + ख्या
+ “आतश्चोपसर्गे ।” इत्यङ् । ततष्टाप् । )
विवरणम् । इति हलायुधः ॥ ( यथा, भाग-
वते । ७ । १३ । ८ ।
“न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित् ॥”
ग्रन्थः । यथा, तन्त्रसारे वागीश्वरीप्रकरणे ।
“शुभ्रां स्वच्छविलेपमाल्यवसनां शीतांशुखण्डो-
ज्ज्वलां

व्याख्यामन्त्रगुणं सुधाढ्यकलसं विद्याञ्च हस्ताम्बुजैः ।
बिभ्राणां कमलासनां कुचनतां वाग्देवतां सस्मितां
वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसम्पत्-
करीम् ॥”)

व्याख्यागम्यं, क्ली, ( व्याख्यया गम्यम् । ) उत्तराभासभेदः । व्याख्यया विवरणेन गम्यते ज्ञायते यत् । यथा,—
“अक्तव्यस्तपदव्यापि निगूढार्थं तथाकुलम् ।
व्याख्यागम्यमसारञ्च गोत्तरं प्रस्यते बुधैः ॥”
इति व्यवहारतत्त्वम् ॥

व्याख्यातः, त्रि, विवृतः कथितः । वि-आङ्पूर्ब्बकख्याधातोः क्तप्रत्ययेन निष्पन्नमिदम् ॥

व्याघातः, पुं, ( व्याहन्यतेऽनेनेति । वि+आ+हन+घञ् । ) विष्कम्भादिसप्तविंशतियोगान्तर्गतत्रयोदशयोगः । यथा,—
“परिघस्य त्यजेदर्द्धं शुभकर्म्म ततः परम् ।
त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाड़िकाः ॥
गण्डव्याघातयोः षट् च नव हर्षणवज्रयोः ।
वैधृतिव्यतिपातौ च समस्तौ परिवर्जयेत् ॥”
इति ज्योतिस्तत्त्वम् ॥*॥

तत्र जातफलम् ।
“व्याघातकर्म्मा च सतां नितान्तं
व्याघातजन्मा मनुजः कठोरः ।
असत्यभाषी कृपया विहीनो
मन्देक्षणो दीर्घतनुः कृशाङ्गः ॥”
इति कोष्ठीप्रदीपः ॥*॥

अन्तरायः । ( यथा, महाभारते ।१२।२८८।
“तेन व्याघातमन्त्राणां क्रियमाणमवेक्ष्य च ॥”)
प्रहारः । इति मेदिनी ॥ अलङ्कारविशेषः । तस्य लक्षणं यथा,—
“यद्यथा साधितं केनाप्यपरेण तदन्यथा ।
तथैव यद्विधीयेत स व्याघात इति स्मृतः ॥”
येनोपायेन यत् एकेन उपकल्पितं तस्यान्येन जिगीषुतया तदुपायकमेव यदन्यथाकरणं स ससाधितवस्तुव्याहतिहेतुत्वात् व्याघातः । उदाहरणम् ।
“दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ता स्तुमो वामलोचनाः ॥”
इति काव्यप्रकाशे १० उल्लासः ॥

व्याघ्रः, पुं, ( व्याजिघ्रतीति । वि+आ+घ्रा+कः ।) जन्तुविशेषः । वाघ इति भाषा ॥ (यथा, छान्दोग्ये । ६ । ९ । ३ ।
“त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥”) तत्पर्य्यायः । शार्द्दूलः २ द्वीपी ३ । इत्यमरः ॥ पृदाकुः ४ वनन्धः ५ चित्रकः ६ पुण्डरीकः ७ । इति जटाधरः ॥ हिंस्रपशुः ८ व्याड़ः ९ हिंस्रकः १० हिंसारुः ११ श्वापदः १२ । इति शब्दरत्नावली ॥ पञ्चनखः १३ व्यालः १४ गुहाशयः १५ तीक्ष्णदंष्ट्रः १६ भीरुः १७ नखायुधः १८ । अस्य मांसगुणाः ।
“शार्द्दूलसिंहमरभर्क्षतरक्षुमुख्या
येऽन्ये प्रसह्य विनिहत्यभिवर्त्तयन्ति ।
ते कौशिकाः प्रहसनाः पललं तदीयमर्शःप्रमेहजठरामयनाशकारि ॥”
इति राजनिर्घण्टः ॥

स तु कश्यपभार्य्यादंष्ट्रासन्तानः । यथा,—
“दंष्ट्रा त्वजनयत् पुत्त्रान् व्याघ्रसिंहांश्च भाविनी ।
द्वीपिनश्च सुतास्तस्या व्याल्याद्याश्चामिषप्रियाः ॥”
इत्याग्नेये वह्निपुराणे काश्यपीयवंशनामाध्यायः ॥ नरादिशब्दोत्तरस्थः श्रेष्ठार्थवाचकः ॥ ( यथा, महाभारते । १ । १५२ । ०६ ।
“किन्नु दुःखतरं शक्यं मया द्रष्टुमतःपरम् ।
योऽहमद्य नरव्याघ्रान् सुप्तान् पश्यामि
भूतले ॥”)
रक्तैरण्डः । करञ्जः । इति मेदिनी ॥

व्याघ्रदलः, पुं, एरण्डवृक्षः । इति शब्दमाला ॥ राजनिर्घण्टे रक्तैरण्डपर्य्याये व्याघ्रतल इति पाठः ॥

व्याघ्रनखं, क्ली, ( व्याघ्रस्य नखमिव ।) नखीनामगन्धद्रव्यम् । तत्पर्य्यायः । व्याड़ायुधम् २ करजम् ३ चक्रकारकम् ४ । इत्यमरः ॥ नखाङ्कम् ५ नखी ६ नख्यम् ७ व्याघ्रनखी ८ । इति शब्दरत्नावली ॥ ( यथा, बृहत्संहितायाम् ।७७।६।
“मञ्जिष्ठया व्याघ्रनखेन शुक्त्या
त्वचा सकुष्ठेन रसेन चूर्णः ।
तैलेन युक्तोऽर्कमयूखतप्तः
करोति तच्चम्पकगन्धितैलम् ॥”)
तत्पर्य्यायगुणाः ।
“नखं व्याघ्रनखं व्याघ्रायुधं तच्चक्रकारकम् ।
नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी ॥
नखद्वयं ग्रहश्लेष्मवातास्रज्वरकुष्ठहृत् ।
लवणं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम् ।
अलक्ष्मीमुखदौर्गन्ध्यहृत् पाकरसयोः कटुः ॥”
इति भावप्रकाशः ॥
कन्दविशेषः । नखक्षतविशेषः । इति मेदिनी ॥

व्याघ्रनखः, पुं (व्याघ्रस्य नखमिव कण्टकं यस्य ।) स्नुहीवृक्षः । व्यालनखः । इति राजनिर्घण्टः । व्याघ्रस्य नखश्च ॥

व्याघ्रनखकं, क्ली, ( व्याघ्रनखमेव । स्वार्थे कन् । ) नखक्षतम् । इति शब्दमाला ॥

व्याघ्रनायकः, पुं, ( व्याघ्रस्य नायक इव । ) शृगालः । इति राजनिर्घण्टः ॥

व्याघ्रपात्, [द्] पुं, ( व्याघ्रस्य पाद इव ग्रन्थियुक्तमूलानि यस्य । “पादस्य लोपोऽहस्त्यादिभ्यः ।” ५ । ४ । १३८ । इत्यलोपः ।) विकङ्कतवृक्षः । इत्यमरः ॥ मुनिविशेषः । इति पुराणम् ॥ व्याघ्रतुल्यचरणे, त्रि । इति मुग्धबोधव्याकरणम् ॥

व्याघ्रपादः, पुं, (व्याघ्रस्य पादा इव मूलानि यस्य ।) विकङ्कतवृक्षः । विकण्टकवृक्षः । इति राजनिर्घण्टः ॥ (मुनिविशेषः । यथा, महाभारते । १३ । १४ । १०६ ।
“पुरा कृतयुगे तात ऋषिरासीत् महायशाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ॥”)

व्याघ्रपुच्छः, पुं, ( व्याघ्रस्य पुच्छमिव सदृशदलमस्य । ) एरण्डवृक्षः । इत्यमरः ॥ व्याघ्रस्य लाङ्गूलञ्च ॥

व्याघ्राटः, पुं, (व्याघ्र इव अटतीति । अट गतौ+पचाद्यच् । ) भरद्वाजपक्षी । इत्यमरः ॥

व्याघ्रादनी, स्त्री त्रिवृता । इत्यमरः ॥

व्याघ्रास्यः, पुं, ( व्याघ्रस्य आस्यमिव आस्यमस्य ।) बिड़ालः । इति शब्दचन्द्रिका ॥ व्याघ्रमुखे, क्ली ॥

व्याघ्री, स्त्री, ( व्याघ्र+ङीष् । ) कण्टकारी । इत्यमरः ॥ व्याघ्रपत्नी च ॥ ( यथा, रघुः । १२ । ३७ ।
“मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वयाकृतम् ॥”)

व्याजः, पुं, ( व्यजति यथार्थव्यवहारादपगच्छत्यनेनेति । वि+अज+घञ् । घञि विभाषा नास्ति । ) कपटः । स तु अयथार्थव्यवहारः । वञ्चनमात्रफलम् । इति सर्व्वानन्दो मधुश्च ॥ अपदेशः । स कारणान्तरप्रवृत्तः कारणान्तरोद्भावनम् । व्याजोऽत्र स्वरूपाच्छादनम् । यथा ध्यानव्याजमुपेत्य चिन्तयसि कामिति । व्याजोऽयमभिप्रायगोपनफलः । पूर्व्वोक्तस्तु परापकारफलः । इत्ययथार्थव्याजयोर्भेदः । अन्यमुद्दिश्य अन्यप्रतिपादनमिह व्याज इत्यर्थः । यदाह अन्यमुद्दिश्य अन्यार्थमनुष्ठानं अपदेशः । यथा, जलक्रीड़ामुद्दिश्य जारावलोकनार्थं यातीति । इत्यमरभरतौ ॥

व्याजनिन्दा, स्त्री, (व्याजेन निन्दा ।) कपटकुत्सा । अलङ्कारविशेषः । यथा,—
“निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते ॥”
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
“विधे स निन्द्यो यस्ते प्रागेकमेवाहरच्छिरः ॥”)

व्याजस्तुतिः, स्त्री, ( व्याजेन स्तुतिः । व्याजरूपा स्तुतिश्च ।) कपटप्रशंसा । अलङ्कारभेदः । यथा,
“उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ॥”
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
“कः स्वर्धुनि ! विवेकस्ते पापिनो नयसे दिवम् ॥”)

व्याजोक्तिः, स्त्री, (व्याजेन उक्तिः ।) छलवाक्यम् । अलङ्कारविशेषः । यथा,—
“व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम् ॥”
इति चन्द्रालोकः ॥
( उदाहरणं यथा,—
“सखि ! पश्य गृहारामपरागैरस्मि धूसरा ॥”)

व्याड़ः, पुं, सर्पः । मांसभक्षकपशुः । इत्यमरः ॥ ( यथा, मार्कण्डेये । । १५ । १० ।

